सक्त्यैव याति पान्थे वदनकुमुदिनीबन्धुमालिन्यकर्त्री
हंसप्रोल्लासहर्त्री दृशि नलिनदृशः प्रावृडाविर्बभूव ॥
[ ? ]

शोपहेतुको यथा—

त्वामालिख्य प्रणयकुपितां धातुरागैः शिलाया-
मात्मानं ते चरणपतितं यावदिच्छामि कर्तुम् ।
अस्रैस्तावन्मुहुरुपचितैर्दृष्टिरालुप्यते मे
क्रूरस्तस्मिन्नपि न सहते संगमं नौ कृतान्तः ॥
[ मेघदूत 107 ]

आलिख्येत्यपीच्छाविषय एव । इयं च मेघदूते कुबेरशापयक्षोक्तिः ॥

विरहहेतुको यथा—

अन्यत्र व्रजतीति का खलु कथा नाप्यस्य तादृक् सुहृत्
यो मां नेच्छति नागतश्च सहसा कोऽयं विधेः प्रक्रमः ।
इत्यल्पेतरकल्पनाकवलितस्वान्ता निशान्तान्तरे
बाला वृ[ 9 b ]त्तविवर्तनव्यतिकरा नाप्नोति निद्रां निशि ॥
[ Quoted in का० प्रदीप IV ]

एषा विरहोत्कण्ठिता इत्यभिलाषहेतुकाङ्क्ष्यते ॥

यथा वा मम—

संध्येयं समुपागतेव विरतिं, संकेतकालः, प्रियो
नाद्यापीक्षणगोचरीभवति, तन्मन्ये नियुक्तः क्वचित् ।
कार्ये तर्कविचारमूढगुरुणेत्युत्कण्ठया कुण्ठिता
स्थातुं नागरसुन्दरी न सदने शक्नोति नो वा बहिः ॥
[ ? ]

१ B शापहेतुर्यथा. २ का० प्रदीप–दृ इ हा.

२. हास्यो यथा—

न्यङ्गक्रीडादिभिश्चेतोविकासो हास उच्यते ।
रसो यस्तत्प्रकृतिकः स हास्यः कथितो बुधैः ॥ २९ ॥
[का० प्रदीप IV]

न्यङ्गमङ्गवैकृतम् ।

उदाहरणम्—

आकुञ्च्य पाणिमशुचिं मम मूर्ध्नि वेश्या
मन्त्राम्भसां प्रतिपदं पृषतैः पवित्रे ।
तारस्वरं प्रथितथूत्कमदात्प्रहारं
हा हा हतोऽहमिति रोदिति विष्णुशर्मा ॥
[Quoted in का० प्र० IV. 37 and का० प्रदीप IV]

अत्र ताड्यमानो विष्णुशर्मा आलम्बनम् रसाश्रयश्च । तत्कर्तृक-क्रन्दनमुद्दीपनम् । तद्वाक्यमनुभावः । चापलादि व्यभिचारीति ॥

यथा वा मम—

अत्यन्तमिष्टमिति वारवधूवराङ्ग-
मास्वादयामि रसनौष्ठपुटेन यावत् ।
तावत्तथा प्रहृतमग्रकरेण तन्व्या
चैतन्यशून्यमिव मे हृदयं यथाभूत् ॥
[ ? ]

अत्र वैदिक आलम्बनम् । कीदृग् वाराङ्गनावराङ्गमिति पृष्टे कस्मिंश्चि-द्विलासिनि अतिस्वाद्विति चे.तेनोत्तरिते माधुर्यभ्रान्त्या वैदिककर्तृकं रसनौष्ठ-[10 a]पुटेन वराङ्गास्वादनं तत्कर्तृकं प्रहरणं चोद्दीपनम् । एतद्वाक्यप्रयोगचेतः-शून्यतादयोऽनुभावाः । आवेगनिर्वेदादयो व्यभिचारिणः । तैर्वासनारूपतया स्थितस्य श्रोतुर्हासस्याभिव्यक्तिः ॥

अत्राहुः—

आत्मस्थः परसंस्थश्चेत्यस्य भेदद्वयं मतम् ।
आत्मस्थो द्रष्टुरुत्पन्नो विभावेक्षणमात्रतः ॥ ३० ॥
[सं० र० VII, 1432]

---

१ D व्यङ्ग्य°. २ B D स्टे. ३ B D om. च. ४ B वाराङ्गनाकर्तृकं. ५ B एतद्वाक्यश्रवणजनितदन्तप्रकाशादिराक्षिप्तोऽनुभावः । चापलादिर्व्यभिचारीति । तैर्वासना°. ६ B D संचारिणः. ७ B हसितस्याभिव्यक्तिः.

अयं चोदाहृतः ॥

हसन्तमपरं दृष्ट्वा विभावैश्चोपजायते ।
योऽसौ हास्यरसस्तज्ज्ञैः परस्थः परिकीर्तितः ॥ ३१ ॥
[सं० र० VII. 1433]

स यथा—

श्रीतातपादैर्विहिते निबन्धे
निरूपिता नूतनयुक्तिरेषा ।
अङ्गं गवां पूर्वमहो पवित्रं
कथं न वा रासभधर्मपत्न्याः ॥
[र० गं० p. 43]

अत्र तार्किकपुत्रो रसाश्रयः । तस्य निरूपितोऽपूर्वः[2] पूर्वपक्ष आलम्बनम् । पितुः सौग्ध्यं स्मर्यमाणमुद्दीपनम् । तत्कर्तृकं स्वस्य महत्त्वप्रकाशनमनुभावः । चापलं व्यभिचारी । एतैस्तार्किकपुत्रे हासो व्यज्यते । रदनप्रकाशनैतद्वाक्यप्रयोगविशिष्टस्तार्किकपुत्रश्च सामाजिकानामालम्बनम् । तदीया निःशङ्कोक्तिरुद्दीपिका । रदनप्रकाशनमनुभावः । चापलं व्यभिचारि । एतैः सामाजिकानिष्ठहास्यस्याभिव्यक्तिः ॥

उत्तमानां मध्यमानां नीचानामप्यसौ भवेत् ।
व्यवस्थः कथितस्तस्य षड् भेदाः सन्ति चापरे ॥ ३२ ॥
स्मितं च हसितं प्रोक्तमुत्तमे पुरुषे बुधैः ।
भवेद्विहसितं चोपहसितं मध्यमे नरे ।
नीचेऽपहसितं चातिहसितं परिकीर्तितम् ॥ ३३ ॥
ईषत्फुल्लकपोलाभ्यां कटाक्षैरप्य[10 b]नुल्बणैः ।
अदृश्यदशनो हासो मधुरस्मितमुच्यते ॥ ३४ ॥
वक्त्रनेत्रकपोलैश्चेदुत्फुल्लैरुपलक्षितः ।
किंचिल्लक्षितदन्तश्च तदा हसितमिष्यते ॥ ३५ ॥
सशब्दं मधुरं कार्यं गतं चन्दनरागवत् ।
आकुञ्चिताक्षिगण्डं च विदुर्विहसितं बुधाः ॥ ३६ ॥

---

१ D ०रसस्तज्ज्ञैः.　२ D adds स्वपितृनिरूपितः after अपूर्वः.　३ B om. चापलं...व्यज्यते. ४ D उद्देशात्यो व्यभिचारिणः for चापलं व्यभिचारि ५ D विहसितं, for च हसितं. ६ D सशब्दमधुरं. ७ B मद for गण्ड.

निकुञ्चितांसशीर्षश्च जिह्मदृष्टिविलोकनः ।
उत्फुल्लनासिको हासो नाम्नोपहसितं मतम् ॥ ३७ ॥
अस्थानजः साश्रुदृष्टिराकम्प्रस्कन्धमूर्धकः ।
शार्ङ्गदेवेन गदितो हासोऽपहसिताह्वयः ॥ ॥ ३८ ॥
स्थूलकर्णकटुध्वानो बाष्पपूरप्लुतेक्षणः ।[1]
करोपगूढपार्श्वश्च हासोऽतिहसितं मतम् ॥ ३९ ॥
[सं० र० VII. 1434-41; र० गं० pp 43-44]

३. इष्टनाशादिभिश्चेतोवैक्लव्यं शोकशब्दभाक् ।
रसोऽयं तत्प्रकृतिकः करुणः परिकीर्तितः ॥ ४० ॥
[ ? ]

आदिशब्दादनिष्टाप्तेः । स यथा—[2]

हा मातस्त्वरितासि कुत्र किमिदं हा देवताः क्वाशिषः
धिक् प्राणान् पतितोऽशनिर्हुतवहस्तेऽङ्गेषु दग्धे दृशौ ।[3]
इत्थं घर्घरमध्यरुद्धकरुणाः पौराङ्गनानां गिर-
श्चित्रस्थानपि रोदयन्ति शतधा कुर्वन्ति भित्तीरपि ॥
[ Quoted in का० प्र० IV. 38]

अत्र विपन्ना काचिदीश्वरी संबोध्या आलम्बनम् । तदङ्गदाह उद्दीपनम् । आक्रन्दनाश्रुपातादयोऽनुभावाः । खेदनिर्वेदचिन्तावेगादयो व्यभिचा[11a]रिणः । तैः शोकाभिव्यक्तिः ॥

यथा वा मम—

भवने गमनं वनेऽपि वा सहचारश्चिरमावयोः पुरा ।
कतमादपराधतोऽधुना सहसा लक्ष्मण मामुपेक्षसे ॥
[ ]

अत्र लक्ष्मण आलम्बनम् । मेघनादनिर्मुक्तशक्तिप्रहारजन्यमूर्च्छा[4] असंभाषणादि[5] उद्दीपनम् । रामकर्तृकाक्रन्दनाश्रुपातादयोऽनुभावाः । दैन्या-

---

१ सं०र०reads स्थूलकर्णः.२ Jhalakikar has following remark about the original source of this stanza: काश्मीरराजजननीमरणे उत्साहयित्रा भट्टनारायणेन रुदितं कृतमिति जयन्तभट्टः। मदालसायां दह्यमानायां पौरस्त्रीरुदितवर्णनमिदमिति महेश्वरः। राजपत्न्यां स्वर्यातायां तत्परिजनविलापोक्तिरित्यन्ये. ३ C resumes from °हुतवह. ४ C D °मूर्च्छा । तज्जन्यमसंभाषणादि. ५ C D add च after असंभाषणादि.

दयो व्यभिचारिणः। तैः शोकाभिव्यक्तिः। पूर्वमिष्टनाशात् अत्रेष्टस्य पर्यन्ते जीवनात् अनिष्टप्राप्तिमात्राच्च पूर्वस्माद्भेदः॥

४. प्रतिकूलेषु तैक्ष्ण्यस्य प्रबोधः क्रोध उच्यते।
रसो यस्तत्प्रकृतिकः स रौद्रः परिकीर्तितः ॥४१॥

यथा—

कृतमनुमतं दृष्टं वा यैरिदं गुरु पातकं
मनुजपशुभिर्निर्मर्यादैर्भवद्भिरुदायुधैः।
नरकरिपुणा सार्धं तेषां सभीमकिरीटिना-
मयमहमसृङ्मेदोमांसैः करोमि दिशां बलिम्॥
[वेणी॰ III. 24, quoted in का॰ प्र॰ IV. 3)]

इयं च वेणीसंवरणे द्रोणवधानन्तरमश्वत्थाम्नः पाण्डवान् प्रत्युक्तिः। अत्रार्जुनादय आलम्बनम्। गुरुवध उद्दीपकः। परपीक्तिदन्तपीडनबाणसंधानादिकमनुभावः। गर्वामर्षावेगोमतादयः संचारिणः॥

यथा वा मम—

अवार्यनलकार्तवीर्यगलकुक्षिवक्षःस्थला-
दनर्गलविनिर्गलद्बहलरक्तरक्तत्विषा।
भवद्रुधिरतर्पणे स्फुरदनल्पधाराज्वल-
ज्वलत्परशुना मम प्रतिभुवा हठाद् भूयते॥
[ ]

[11 b] अत्र तदानीं रामःवेनाज्ञातो गुरुकार्मुकभञ्जक आलम्बनम्। अत एव विशेष्यानुपादानम्। गुरुद्रोहो नामग्रहणानौचित्यात् क्रोधाधिक्याद्वा। ध्वनिविशेषानुमितो निःशङ्कधनुर्भङ्ग आक्षिप्त उद्दीपकः। परपोक्तिर्परशुप्रदर्शनादयोऽनुभावाः। गर्वादयो व्यभिचारिणः। तैः क्रोधाभिव्यक्तिः। पूर्वं गुरुनाशजन्यः। अत्र गुरुद्रोहमात्रजन्यः क्रोधः। पूर्वत्र रसाननुगुणो बन्धः। अत्र तु तदनुगुण इति पूर्वस्माद्भेदः॥

१ C D गर्वामर्षावेगादयः. २ B C 'परप' for 'परशु' ३ D गधर्वादयो. ४ C D गुरुनाशजन्य क्रोध, अत्र तु गुर्वपराधजन्य.

५. कार्यारम्भेषु संरम्भः स्थेयानुत्साह उच्यते ।
रसो यस्तत्प्रकृतिकः सोऽयं वीरस्त्रिधा मतः ।
युद्धवीरो दानवीरो दयावीरस्तथापरः ॥ ४२ ॥

[ ? ]

तत्राद्यो यथा—

क्षुद्राः संत्रासमेते विजहित हरयः क्षुण्णशक्रेभकुम्भाः
युष्मद्देहेषु लज्जां दधति परममी सायका निष्पतन्तः ।
सौमित्रे तिष्ठ पात्रं त्वमसि हि न रुषां नन्वहं मेघनादः
किंचिद्भ्रूभङ्गलीलानियमितजलधिं राममन्वेषयामि ॥

[ हनुमन्नाटक XI-2: quoted in का॰प्र॰ IV. 40 ]

अत्र राम आलम्बनम् । रणदर्शनमुद्दीपनम् । अनुनायकलक्ष्मणाद्यवहेलनमनुभावः । गर्वामर्षादयः संचारिणः । तैरुत्साहोऽभिव्यज्यते ॥

यथा वा मम—

दिङ्मुखे जयतुरङ्गरेणुभिः
पत्रिभिः शिततरैः शरासने ।
विद्विषां शिरसि यस्य चाज्ञया
स्थीयते युगपदेव संगरे ॥

[ ]

[ 12 a ] दानवीरो यथा—

प्रेम तस्य न गुणेषु नाभव-
न्न स्म वेद न गुणान्तरं स सः ।
दित्सया तदपि पार्थिवोऽर्थिनं
गुण्यगुण्य इति न व्यचारयत् ॥

[ ]

अत्र पात्रलाभो विभावः । पण्डितापण्डितसाधारण्येन दानमनुभावः । हर्षादयः संचारिणः । तैर्दानविषयोत्साहस्य प्रतीतिः ॥

---

१ B D विजहत. २ C D च सः. ३ B सपदि. ४ D व्यजीजनत्.
५ C तैर्दानविषयोत्साहाभिव्यक्तिः; D om. तै...प्रतीतिः

दयावीरो[1] यथा—

तथेति गामुक्तवते दिलीपः सद्यः प्रतिष्टम्भविमुक्तबाहुः ।
स न्यस्तशस्त्रो हरये स्वदेहमुपानयत्पिण्डमिवामिषस्य ॥
[ रघु॰ II.59 ]

६. रौद्र[3]शक्त्या तु जनितं चित्तवैक्लव्यदं भयम् ।
रसो यस्तत्प्रकृतिकः सोऽयं वाच्यो[4] भयानकः ॥ ४३ ॥
[ ]

स यथा—

ग्रीवाभङ्गाभिरामं मुहुरनुपतति स्यन्दने बद्धदृष्टिः
पश्चार्धेन प्रविष्टः शरपतनभयाद्भूयसा पूर्वकायम् ।
शष्पैरर्धावलीढैः श्रमविवृतमुखभ्रंशिभिः कीर्णवर्त्मा
पश्योदग्रप्लुतत्वाद्वियति बहुतरं स्तोकमुर्व्यां प्रयाति ॥
[शाकुन्तल I. 7, quoted in का॰प्र॰ IV.41 ]

अत्र राजा आलम्बनम् । शरपात उद्दीपनम् । पश्चाद्दर्शनादयोऽनुभावाः । त्रासादयः संचारिणः । 'औत्पातिकप्रभवस्त्रासः स्वापराधोत्थं भयमिति' मते[6] । यथा मम—

वीक्ष्य घोरघनघर्घरस्वरां
भीषणामथ विभीषणानुजाम् ।
आलिलिङ्ग परिशुष्यदानना
कानने रघुपतिं विदेहजा ॥
[ ]

अत्र शूर्पणखा आलम्बनम् । विकृताकृतिदर्शनमुद्दीपनम् । आलिङ्गनाननशोषादयोऽनुभावाः । त्रासावेगदैन्यादयः[7] संचारिण ॥

७. जुगुप्सा गर्हणार्थानां दोषमाहात्म्यदर्शनात् ।
[12a]रसो यस्तत्प्रकृतिकः स बीभत्सो बुधैः स्मृतः ॥४४॥
[ ]

---

१ D om. दयावीरो... down to उद्दीपनम्. २ B C add after this : अत्र दयापोषित उत्साहः स्थायी. ३ B रौद्रे शक्त्या. ४ B वीरो भयानकः. ५ दर्भैः in शाकुन्तल and elsewhere. ६ C D मते तु. ७ C त्रासादयः, D त्रासदैन्यादयः.

स यथा—

उत्कृत्योत्कृत्य कृत्तिं प्रथममथ पृथूत्सेधभूयांसि मांसा-
न्यंसस्फिक्पृष्ठपिण्ड्याद्यवयवसुलभान्युग्रपूतीनि जग्ध्वा ।
आर्तः पर्यस्तनेत्रः प्रकटितदशनः प्रेतरङ्कः करङ्का-
दङ्कस्थादस्थिसंस्थं स्थपुटगतमपि क्रव्यमव्यग्रमत्ति ॥
[मा॰मा॰ V.16; quoted in का॰ प्र॰ IV. 42]

स्थपुटं गम्भीरविषमम् । अत्र शव आलम्बनम् । कृत्युत्कर्तनादिकमुद्दीपनम् । आक्षिप्तरोमाञ्चनेत्रनिमीलनादयोऽनुभावाः । आवेगादयः संचारिणः ॥

यथा वा मम—

मज्जामस्तिष्कपङ्कप्लवनविघटितप्रौढघर्माश्रुघर्मा
रक्तेनारक्तदेहाः कृतनलकगलत्पूयगाढाङ्गरागाः ।
कृत्तैर्नागेन्द्रकर्णैर्मदयुतवनितावीज्यमानाः श्मशाने
क्रव्यादाः कौतुकेन प्रतिशुचिविवशं भोगितां भावयन्ति ॥
[ ]

अत्र पूयादि आलम्बनम् । तत्क्षेपणादिकमुद्दीपनम् । अन्यत् पूर्ववत् ॥

८. विस्मयश्चित्तविस्तारो वस्तुमाहात्म्यदर्शनात् ।
रसो यस्तत्प्रकृतिकः सोऽद्भुतः परिकीर्तितः ॥ ४५ ॥
[ ]

स यथा—

चित्रं महानेष बतावतारः
क्व कान्तिरेषाभिनवैव भङ्गिः ।
लोकोत्तरं धैर्यमहो स्वभावः
काप्याकृतिर्नूतन एव सर्गः ॥
[Quoted in का॰प्र॰ IV. 43]

अत्र वामन आलम्बनम् । विलक्षणकान्त्यादिदर्शनमुद्दीपनम् । एतद्वाक्यप्रयोगाश्चर्यं च विस्फारितनयनाव[13a]लोकनादिकमनुभावः । आवेगादयः संचारिणः । तैर्विस्मयाभिव्यक्तिः ॥

१ CD पृथूत्सेध॰; मा॰मा॰ ॰पृथूच्छोफ॰. २ D आर्तः पर्यस्तनेत्रः. ३ B स्वपुटगतम्. ४ BD गम्भीरविषयम्; C निम्नविषमम्. ५ B ॰पङ्कप्लवनविघटित॰. ६ D प्रभावः.

१. तत्त्वज्ञानादिना चेतोवृत्तिर्वैराग्यशब्दभाक् ।
निर्वेदस्तत्प्रकृतिको रसः शान्त इतीरितः ॥ ४६ ॥
[ ]

स यथा—

अहौ वा हारे वा कुसुमशयने वा दृषदि वा
मणौ वा लोष्ठे वा बलवति रिपौ वा सुहृदि वा ।
तृणे वा स्त्रैणे वा मम समदृशो यान्तु[2] दिवसाः
क्वचित्पुण्यारण्ये शिव शिव शिवेति प्रलपतः ॥
[ Quoted in का॰प्र॰ IV. 44]

अत्र प्रपञ्चः सर्वोऽप्यालम्बनम् । अनित्यताविज्ञानमाश्रिमुद्दीपनम् । सर्वत्र समदर्शिता अनुभावः । मत्यादयः संचारिणः ॥

यथा वा मम—

नादेयं कनकं न हेयमथवा स्वप्नेऽपि हालाहलं
न स्नेहस्तरुणीजने न कुटिलव्यालेऽपि कोपोदयः ।
न स्तोत्रेण सुखं द्विषापि कृतया दुःखं न वा निन्दया
श्रीविश्वेशदयावशादपरया सैषा दशा मेऽधुना ॥
[ ]

अत्र वदन्ति—शान्तो नाम रसस्[3]तावदनुभवसिद्धतया दुरपह्नवः । न चैतस्य स्थायी निर्वेदो युज्यते । तस्य विषयेष्वलप्रत्ययरूपत्वादात्मावमानरूपत्वाद्वा । शान्तश्च निखिलविषयपरिहारजनितात्ममात्रविश्रामानन्दप्रादुर्भावमयत्वानुभवात् । तदुक्तम्—

---

१ B has a marg. note on this verse : प्रशस्तिरचनान्ते स्यमस्ति, Jhalakikar has following remarks on this stanza : काश्मारदेशस्थस्याभिनवगुप्तपादाचार्याणां परमगुरोः प्रत्यभिज्ञासूत्राद्यनेकग्रन्थकर्तुः श्रीमदुत्पलराजस्य पद्यमिदमिति देमन्द्रकविकृतायामौचित्यविचारचर्चायां तट्टिप्पणे च स्पष्टम् । यद्यपीदं पद्यं भर्तृहरिकृते वैराग्यशतके दृश्यते तथापि भर्तृहरेः शतकत्रयेऽपि अन्यकविकृतान्यपि बहूनि पद्यान्युपलभ्यन्ते. Cf. Kosambi 213.
२ D यान्ति. ३ D ends here.

यच्च कामसुखं लोके यच्च दिव्यं महत्सुखम् ।
तृष्णाक्षयसुखस्यैते कलां नार्हन्ति षोडशीम् ॥ इति ।
[ Quoted in धन्या० III ]

[ 13b ] अत एव सर्ववृत्तिविरामोऽस्य स्थायीति निरस्तम् । अभावस्य स्थायित्वायोगात् । तस्माच्छमोऽस्य स्थायी । निर्वेदादयस्तु व्यभिचारिणः । स च शमः—

निरीहावस्थायामानन्दः स्वात्मनि स्थितेः ।
रसो यस्तत्प्रकृतिकः स शान्त इति भण्यते ॥ ४७ ॥
[ ]

इति सिद्धम् ॥

अथ कथमेत एव रसाः । भगवदालम्बनस्य रोमाञ्चाश्रुपातादिभिरनुभावितस्य हर्षादिभिः परिपोषितस्य भागवतादिपुराणश्रवणसमये भगवद्भक्तैरनुभूयमानस्य भक्तेः रसस्य दुरपह्नवत्वात् । भगवदनुरागरूपा भक्तिश्चात्र स्थायिभावः ॥

स यथा—

नो ददासि यदि तत्त्वधियं मे
यच्छ मोहमपि तं रघुवत्स ।
येन रावणवधमूर्युधि मूढा
त्वन्मयं जगदपश्यदशेषम् ॥
[ १ ]

न चासौ शान्तरसेऽन्तर्भावमर्हति । अनुरागस्य वैराग्यविरुद्धत्वात् । उच्यते । भक्तेर्रतित्वेन भावान्तर्गततया रसत्वानुपपत्तेः ॥

रतिर्देवादिविषया व्यभिचारी तथाञ्जितः ।
भावः प्रोक्तस्तदाभासास्त्वनौचित्यप्रवर्तिताः ॥ ४८ ॥
[ का० प्र० IV.35 ]

---

१ A B प्रसिद्धम्. २ The portion from अथ...down to स्थायः is almost identical with र० र० page 45. ३ B adds भक्तिर्न रसः after उच्यते. ४ B भक्तिर्रतित्वेन.

इति प्राचां सिद्धान्तात्। न च तर्हि कामिनीविषयाया अपि रतेर्भावत्वमस्तु, रतित्वाविशेषात्। अस्तु वा भगवद्भक्तेरेव स्थायित्वं कामिन्यादिरतीनां च भावत्वं, विनिर्गमकाभावादिति वाच्यम्। भरतादिमुनिवचनानामेवात्र रसभावत्वादिव्यवस्थापकत्वेन स्वातन्त्र्यायोगात्। अन्यथा पुत्रादिविषयाया अपि रतेः स्थायिभावत्वं [14a] कुतो न स्यात्। न स्याद्वा कुतः क्षुद्रभावत्वं हासशोकादीनामित्यखिलं दर्शनमाकुलीस्यात्। रसानां नवत्वगणना च मुनिवचनैर्नियन्त्रिता मन्येतेति यथाशास्त्रमेव न्यायः॥

यत्तु—

रसे सारश्चमत्कारः सर्वत्राप्यनुभूयते।
तच्चमत्कारसारत्वे सर्वत्राप्यद्भुतो रसः॥ ४९॥

[Quoted in सा॰द॰ III and ascribed there to धर्मदत्त]

अतस्तत्त्वद्भुतमेवाह जयदेवः। 'कृती रसमिति' जयदेवेनाद्भुत एव रस इत्यभिहितम्—तन्न। वैलक्षण्यस्यानुभवसिद्धत्वात्। प्रकृतिभेदाच्च। नापि व्यभिचारिषु स्थायिन इव रत्यादिषु विस्मयस्यानुगमः। शोकादिषु तथाननुभवात्। लौकिके रसे नियमतस्तद्विभावादेरनुपनिपातात्। काव्यादौ च तथानुपनिबन्धात्। अथ प्रतीयते तावत्सर्वत्र चमत्कारः। स चाद्भुत एव। तस्यैव रत्यादिविभावानुरोधेन व्यपदेशान्तरमिति तन्न। विस्मयानुरोधेन अद्भुत इत्यस्यापि सुवचत्वात्। अन्यथा तद्विरहिणामपि तदास्वादप्रसङ्गात्। अथ पृथगेवायमद्भुतः सर्वैरेव रसभेदाभिमतैर्जन्यते इति चेत्। जन्यताम्, स तु न रसः। तद्धेतुनियतस्थाय्यभावात्। अलौकिकचमत्कारकारी रस इत्यभियुक्त[14 b]परिभाषितव्यवहारान्। तस्य तथा परिभाषणे तु नास्माकमपचयो न युष्माकमुपचय इति कृतमनल्पजल्पनेन॥

इति श्रीमच्छुक्लभूदेवविरचिते रसविलासे
द्वितीयः स्तबकः॥

---

१ B नियामकाभावादिति वाच्यम्. २ B C स्थायित्वम्. ३ C मुनिवचनयन्त्रिता. ४ The reference to जयदेव seems to be incorrect as the topic is not discussed in चन्द्रालोक. On the contrary विश्वनाथ ascribes the कारिका to धर्मदत्त as तदाह धर्मदत्तः स्वग्रन्थे. See Kane page 287. ५ C adds तर्हि before विस्मया°.

## तृतीयः स्तवकः ।

[-14 b Continued] अथ रसवद्भावस्यापि काव्यात्मरूपतया स्फुटत्वेनोपेक्षानर्हतया प्रसङ्गात् निर्वेदादित्रयस्त्रिंशद्व्यभिचारिभावरूपभावविशेषाणां रसस्वरूपोपपादकतयोपोद्घातेन च भावास्तावन्निरूप्यन्ते ॥ भावानाहुः काव्यप्रकाशकृतः—

रतिर्देवादिविषया व्यभिचारी तथाञ्जितः ।
भावः प्रोक्तस्तदाभासो अनौचित्यप्रवर्तितः ॥५०॥ इति ।
[का० प्र० IV.35]

अञ्जितो व्यञ्जितः, साक्षाच्छब्देनाभिधाने दोषस्य वक्ष्यमाणत्वात् । आदिशब्दात् गुरुनृपपुत्रादिविषया ग्राह्या ॥

व्यभिचारिणश्च—

निर्वेदग्लानिशङ्काख्यास्तथासूयामदश्रमाः ।
आलस्यं चैव दैन्यं च चिन्ता मोहः स्मृतिर्धृतिः ॥ ५१ ॥
व्रीडा चपलता हर्ष आवेगो जडता तथा ।
गर्वो विषाद औत्सुक्यं निद्रापस्मार एव च ॥ ५२ ॥
स्वप्नो विबोधोऽमर्षश्चाप्यवहित्थमथोग्रता ।
मतिर्व्याधिस्तथोन्मादस्तथा मरणमेव च ॥ ५३ ॥
[15a] त्रासश्चैव वितर्कश्च विज्ञेया व्यभिचारिणः ।
त्रयस्त्रिंशदमी भावाः समाख्यातास्तु नामतः ॥५४॥ इति ।
[नाट्यशास्त्र VI. 18-21, का० प्र० IV ]

तत्र देवविषया रतिर्यथा—

शरणं भवन्तमतिकारुणिकं
भव भक्तिगम्यमधिगम्य जनाः ।
जितमृत्यवोऽजित भवन्ति भये
ससुरासुरस्य जगतः शरणम् ॥
[ ? ]

---

१ B adds after °भावस्यापि in brackets: स्फुटस्योपेक्षानर्हत्वप्रसङ्गः । प्रकृतोपपादकत्वमुपोद्घातः. २ C काव्यस्वरूपतया. ३ B तदाभासास्त्वनौचित्यप्रवर्तिताः ४ C तथोन्मादश्चिन्ता । मरणमेव च.

गुरुविषया यथा—

तस्याज्ञयैव परिपालयतः प्रजां मे
कर्णोपकण्ठपलितंकरणी जरेयम्।
यद्गर्भरूपमिव मामनुशास्ति सर्वं-
मद्यापि तन्मयि गुरुर्गुरुपक्षपातः॥
[

द्विजविषया यथा—

हरत्यघं संप्रति हेतुरेष्यतः
शुभस्य पूर्वाचरितैः कृतं शुभैः।
शरीरभाजां भवदीयदर्शनं
व्यनक्ति कालत्रितयेऽपि योग्यताम्॥
[शिशु॰ I. 26, quoted in का॰प्र॰ IV.46]

राजविषया यथा—

राजन् राजसुता न पाठयति मां देव्योऽपि तूष्णीं स्थिताः
कुब्जे भोजय मां, कुमारसचिवैर्नाद्यापि किं भुज्यते।
इत्थं राजशुकस्तवारिभवने मुक्तोऽध्वगैः पञ्जरा
च्चित्रस्थानवलोक्य शून्यवलभावेकैकमाभाषते॥
[Quoted in का॰ प्र॰ X. 440]

पुत्रविषया यथा मदीयपद्ये—[1]

धूलिधूसरकपोलमन्तिके
मातरं समवलोक्य कातरम्।
भ्रातरं सपदि रेवतीपते-
र्नन्दगोपवनिता स्म चुम्बति॥
[　　　]

१.　[15 b] तत्त्वज्ञानापदीर्ष्यादेर्निर्वेदः स्वावमाननम्।
तत्र चिन्ताश्रुनिःश्वासवैवर्ण्योच्छ्वासदीनताः॥ ५५॥
[दशरू॰ IV. 8, का॰प्रदीप IV
चित्तस्य खेदो निर्वेदस्तत्त्वज्ञानोद्यादिभिः॥ ५६॥
[स॰ कं॰ V. 238; का॰प्रदीप IV]

---

1 B मदीये पद्ये.

इत्यपि केचित्। तत्र नीचपुरुषेष्वाक्रोशनाधिव्याधितिरस्कारताडनदारिद्र्येष्टविरहपरसंपद्दर्शनादिभिरुत्तमेषु त्ववमानादिभिर्जनिता विषयविद्वेषाख्या वृत्तिश्चित्तस्येति विवेकः। नित्यानित्यवस्तुविवेकजन्या सा स्थायिभावः॥

उदाहरणम्—

जीवितेन कृतमप्सरसां तत्—
प्राणमुक्तिरिति युक्तिमती नः।
इत्यनक्षरमवाचि घृताच्या
दीर्घनिःश्वसितनिर्गमनेन[1]॥

[नैषधीय० V. 49]

अत्रेन्द्रकर्तृकस्वर्गत्यागजन्येर्ष्या विभावः। निःश्वासादयोऽनुभावाः॥

यथा वा मदीयपद्ये—

नितरां वनिता कलिप्रिया
तनयः केवलमात्मपोषकः।
परकामुकलोलुपा स्नुषा
तदलं निष्फलजीवितेन मे॥

[ ]

इयं च गृहकलहक्लेशितस्य कस्यचिदुक्तिः। अत्रेर्ष्यादिशब्दमात्रो गृहकलह आलम्बनम्। दीनतादयोऽनुभावाः॥

२. रत्यायासकलाभ्यात् ग्लानिर्निष्प्राणतेव या।
तस्यां वैवर्ण्यकम्पानुत्साहकार्श्यादयो मताः॥ ५७॥

[का॰प्रदीप IV; Cf दशरू॰ IV 9]

बलस्याप[16a]चयो ग्लानिराधिव्याधिप्रकर्षभूः[2]॥ ५८॥

[Quoted in र॰सं॰ p. 80]

इत्येके। तत्र। चित्तवृत्त्यात्मकेषु भावेषु नाशरूपाया ग्लानेरसमावेशात्॥

उदाहरणम्—

क्षामक्षामकपोलमाननमुरः काठिन्यमुक्तस्तनं
मध्यः क्लान्ततरः प्रकामविनतावंसौ छविः पाण्डुरा।

१ B C °निर्गमितेन. २ र॰ सं॰ °व्याधिसमुद्भवः ३ Cf र॰ सं॰ P. 80.

शोच्या च प्रियदर्शना च मदनेक्लिष्टेयमालक्ष्यते
पत्राणामिव शोषणेन मरुता स्पृष्टा लता माधवी ॥
[शाकुन्तल III. 12]

अत्र विरहो विभावः। कार्श्यादयोऽनुभावाः॥

३. अनर्थप्रतिभा शङ्का परक्रौर्यात्स्वदुर्नयात्।
वैवर्ण्यकम्पवैमुख्यपार्श्वालोकास्यशोषकृत् ॥ ५९ ॥
[का० प्रदीप IV, Cf दशरू० IV. 10]

उदाहरणम्—

दीर्घं प्रजाभिरतिकौतुकिनीभिराभि-
रस्मिन्नकीर्तिपटहे मम ताड्यमाने।
ज्योतिर्मयेन वपुषा जगदन्तरात्मा
लज्जिष्यते कुलगुरुर्भगवान्वसिष्ठः ॥
[हनुमन्नाटक ?]

अत्र ताडकारूपस्त्रीवधो विभावः। मुखवैवर्ण्यादय आक्षिप्ता अनुभावाः॥

४ परोत्कर्षाक्षमासूया गर्वदौर्जन्यमन्युजा।
दोषोद्घोषभ्रूविभेदावज्ञाक्रोधेङ्गितादयः ॥ ६० ॥
[का० प्रदीप IV; Cf दशरू० IV. 16]

इमामेवासहनादिशब्दैर्व्यवहरन्ति ॥

उदाहरणम्—

आलिमात्मसुभगत्वसगर्वां
यापि शृण्वति मघोनि बभाषे।
यासि[ 16 b ]तेऽपि सघृणासि नृणां किं
यासि न त्वमपि सार्धमनेन ॥
[नैषधीय० V.54 ]

अत्र सौन्दर्यगर्वो विभावः। दमयन्तीनिन्दा अनुभावः॥

यथा वा मम—

वदतु सदसि धृष्टं बुद्धिमानस्ति नैव.
पठतु सकलशास्त्राण्यत्र्यरोपरिस्थितिः क।

१ Pischel reads : मदनग्लानेयमालक्ष्यते. २ Cf र० गं० p. 95.
३ नैषधे च यासि न त्वमपि सार्धमनेन.

अरुददिह पुरासौ बालकैस्ताड्यमानः
प्रतिदिनमभिमानः किंनिदानोऽयमस्य ॥

[ ]

इयं च स्वल्पवयस्कं पण्डितमुद्दिश्य पितृव्यपुत्रस्य मूर्खस्योक्तिः[1]। अत्र दौर्जन्यं विभावः। निन्दावहेलनादिकमनुभावः॥ न चात्र गर्वो विभावः। तस्य मूर्खत्वेन विद्यादिप्रयुक्तगर्वाभावात्॥

यथा वा—

विद्धि चात्तरसमोजसा हरे-
रैश्वरं धनुरभाजि यत्त्वया।
खातमूलमनिलो नदीरयैः
पातयत्यपि मृदुस्तटद्रुमम्॥

[ रघु० XI. 76 ]

अत्र मन्युर्विभावः। अवज्ञा अनुभावः॥

५. मद्यपानेन मनसः समुल्लासो मदः स्मृतः॥ ६१॥

[ ]

संमोहानन्दसंभेद स्खलदङ्गवचोगतिः॥
मधुपानादिजो ज्ञेयो मदो विविधभावकृत्॥ ६२॥
उत्तमसत्त्वः प्रहसति गायति तद्वच्च मध्यमप्रकृतिकः।
परुषवचनाभिधायी शेते रोदित्यधमसत्त्व॥ ॥ ६३॥

[ का० प्रदीप IV ]

अयं च मदस्त्रिविधः। तरु[17a]णमध्यमाधमभेदात्। तत्र—

अव्यक्तासंगतैर्वाक्यैः सुकुमारस्खलद्गतैः।
अभिनेयो मदः सोऽयं तरुणः कथितो बुधैः॥ ६४॥
भुजाक्षेपस्खलद्गत्या घूर्णनैर्मध्यमः स्मृतः।
गतिभङ्गस्मृतिध्वंसहिक्काछर्द्यादिभिः परः॥ ६५॥

[ ]

---

१ C मूर्खस्य पितृव्यस्योक्ति°.

उदाहरणम्—

कोपवत्यनुनयानगृहीत्वा
प्राग्यो मधुमदाहितमोहा ।
कोपितं विरहखेदितचेताः
कान्तमेव कलयन्त्यनुनिन्ये ॥

[ शिशु० X. 39 ]

अत्र मद्यसेवनं विभावः । स्मृतिध्वंसादयोऽनुभावाः ॥

६. श्रमः खेदोऽध्वरत्यादेः श्वासनिद्राभ्रमादिकृत् । ॥ ६६ ॥

[ Cf दशरू० IV. 11 ]

श्रमग्लान्योर्विभेदं तु चक्रे कारणकार्यता ।
श्रमस्यातिशयावस्थामथवा ग्लानिमूचिरे ॥ ६७ ॥

[ का० प्रदीप IV ]

यदाहुः—

अध्वव्यायामसेवाद्यैर्विभावैरनुभावकैः ।
गात्रसंवाहनैरास्यसंकोचैरङ्गमोटनैः ।
निःश्वासैर्जृम्भितैर्मन्दैः पादोत्क्षेपैः श्रमो मतः ॥ ६८ ॥

[ स०र० VII. 1563 64, quoted in र० ग० P. 83 ]

अथ सत्यपि बले जायते शरीरव्यापारादेव च जायते । न तु ग्लानिः ।
असौ ग्लानेः श्रमस्य भेदः । बहुतरशारीरव्यापारजन्मा निःश्वासाङ्गमर्दननिद्रादिकारणीभूतः खेदविशेषः श्रम इति सिद्धम् ॥

उदाहरणम्—

अलसवलितमुग्धान्यध्वसंजातखेदा-
दशिथिलपरिरम्भैर्दत्तसंवाहनानि ।
परिमृदितमृणालीदुर्बलान्यङ्गका[ 17 b ]नि
त्वमुरसि मम कृत्वा यत्र निद्रामवाप्ता ॥

[ उ० रा० I. 24 ]

अत्राध्वसंचारो विभावः । गात्रसंवाहनादयोऽनुभावाः ॥

७. आलस्यं श्रमगर्भादेर्जाड्यजृम्भाक्रियादिकृत् ॥ ६९ ॥

[ दशरू० IV. 25; का० प्रदीप IV]

---

१ C मागर्धा मधुरसाहितमोहा. २ C कलयन्नुनिन्ये. ३ Cf र० ग० P.84
४ C बहुबहुतर°.

अतितृप्तिगर्भव्याधिश्रमादिजन्मा चेतसः क्रियानुन्मुखता आलस्यमिति निष्कर्षः। अत्र च नासामर्थ्यं नापि कार्याकार्यविवेकशून्यत्वम्। तेन कार्यकारणरूपस्यानुभावस्य तुल्यत्वेऽपि ग्लानेर्जडतायाश्च भेदः॥

उदाहरणं मम—

वटकपर्पटमोदकमोदितं
बहुलशाकमनोदनभोजनम्।
व्यथयति द्रुतमास्तरणं कुरु
स्वपिमि तावदिहैव वरानने॥

[ ]

अत्र बहुभोजनं विभावः। स्वापकालक्षेपाक्षमतादयोऽनुभावाः॥ जडतायां मोहात्पूर्ववृत्तित्वमुत्तरवृत्तित्वं वा, न त्वत्रेत्यपरो विशेषः॥

८. दौर्गत्यादेरनोजः स्याद्दैन्यं कार्श्यामृजादिकृत्॥ ६९॥

[का॰ प्रदीप IV]

चिन्तौत्सुक्यान्मनस्तापाद्दौर्गत्याच्च विभाववः।
अनुभावास्तु शिरसोऽप्यावृत्तेर्गात्रगौरवात्।
देहोपस्करणत्यागाद्दैन्यं भावं विभावयेत्॥ ७०॥

[र॰ गं॰ P. 81]

दुःखदारिद्र्यापराधादिजनितस्वापकर्षभावनादिहेतुश्चित्तवृत्तिविशेषो दैन्यमिति निष्कर्षः॥

उदाहरणम्—

येस्यामुहुरुकृतिरुकृतिरेत्य तप्त-
सूचीव्यधव्यति[18a]करेण युनक्ति कर्णौ।
काञ्चीगुणग्रथनभाजनमेव सोऽस्मि
जीवन्न संप्रति भवामि किमावहामि॥

[Quoted in का॰ प्र॰ V.113]

---

१ Cf र॰ गं॰ P. 94. २ C °वर्तितम्. ३ Cf र॰ गं॰ P. 81. ४ Cf र॰ गं॰ P. 81. ५ Jhalakikar comments on the stanza: कीचककृतपराभवं निवेदयन्तीं द्रौपदीं प्रति बृहन्नलारूपस्यार्जुनस्योक्तिरियमिति सुधासागरकारः। अर्जुनस्य बृहन्नलादशायां स्वाभ्युदया किमिति न चेष्टते इति केनापि पृष्टस्य वाक्यमिदमित्युद्योतकारः.

अत्र दौर्गत्यमनस्तापादयो विभावाः। आत्मनिन्दादयोऽनुभावाः॥

९. ध्यानं चिन्ता हितानाप्तेः शून्यताश्वासतापकृत्।
प्रयत्नपूर्विकान्वेषयस्मृतिश्चिन्तेति केचन ॥ ७१ ॥

[का० प्रदीप IV]

विभावा यत्र दारिद्र्यमैश्वर्यभ्रंशनं तथा।
इष्टार्थापहृतिश्चास्यां श्वासोच्छ्वासावधोमुखम् ॥ ७२ ॥
संतापः स्मरणं चैव कार्श्यं देहानुपस्कृतिः।
अधृतिश्चानुभावाः स्युः सा चिन्ता परिकीर्तिता ॥ ७३ ॥
वितर्कोऽस्याः क्षणे पूर्वं पाश्चात्ये चोपजायते ॥ ७४ ॥

[र० गं० P. 82]

इष्टाप्राप्त्यनिष्टाप्तिजनिता ध्यानापरपर्याया वैवर्ण्यभूलेखनाधोमुखत्वादिहेतुश्चित्तवृत्तिविशेषश्चिन्ता इति निष्कर्षः॥

उदाहरणम्—

अनाघ्रातं पुष्पं किसलयमलूनं कररुहै-
रनाविद्धं रत्नं मधु नवमनास्वादितरसम्।
अखण्डं पुण्यानां फलमिवं च तद्रूपमनघं
न जाने भोक्तारं कमिह समुपस्थास्यति विधिः॥

[शाकुन्तल II. 11]

अत्र तदप्राप्तिर्विभावः॥

१०. मोहो विचित्तता भीतिदुःखावेगानुचिन्तनैः।
[18b] घूर्णनाज्ञानपतनभ्रमणादर्शनादिकृत् ॥ ७५ ॥

[का० प्रदीप IV]

एवं च भयवियोगादिप्रयोज्या वस्तुतत्त्वानवधारिणी चित्तवृत्तिर्मोहः। अन्तरान्तरा शून्यताख्यचित्तवृत्तिसंवलिता सेति तु नव्याः॥

---

१ Cf र० गं० P. 82. २ C अधोमुख्यश्चित्त°. ३ B C. फलमिह- ४ Pischel भुवि. ५ B C add after विभावः—स्मरणादिकमनुभावः. ६ Cf. र० गं० P. 79.

उदाहरणं यथा मम—

वारं वारं कमलनयनः प्रेक्षते मत्पुरस्तात्[1]
पाणिस्पर्शे कथमपि कृते जायते नास्य कल्पः ।
उक्तः किंचिन्न वदति पुनस्तेन मुग्धीकृताहं
नालं दातुं हृदयमधुना कार्यसांसारिकेषु ॥
[ ]

अत्र वियोगो विभावः । मनोवैक्लव्यादिकमनुभावः[2] ॥

११. सदृशज्ञानचिन्ताद्यैः संस्काराज्जायते स्मृतिः ।
भ्रूसमुल्लासकरजवादनादिस्तदुद्भवः ॥ ७६ ॥
[का॰ प्रदीप IV]

एवं च संस्कारजन्यं ज्ञानं स्मृतिः[3] ॥

उदाहरणम्—

एतत्तदेव कदलीवनमध्यवर्ति
कान्तासखस्य शयनीयशिलातलं ते[4] ।
अत्र स्थिता तृणमदाद्बहुशो यदेभ्यः
सीता ततो हरिणकैर्न विमुच्यते स्म ॥
[cf. उ॰ रा॰ IV. 21]

अत्र शिलातलदर्शनमेकसंबन्धिज्ञानविषयाऽपरसंबन्धिस्मारकं विभावः । भ्रूविकासादय आक्षिप्ता अनुभावाः ॥

१२. अभीष्टार्थस्य संप्राप्तौ स्पृहापर्याप्तता धृतिः ।
[स॰ कं॰ V. 201]
सौहित्यवदनोल्लाससहासप्रतिभादिकृत् ॥ ७७ ॥
[The whole found in का॰ प्रदीप IV]

एवं च लोभशोकभयादिजनितोपप्लवनि[19 a]वारणकारणीभूतश्चित्तवृत्तिविशेषो धृतिः ॥

उदाहरणं मम—

अयि नन्दकुमारमभ्युपेतं
भवनद्वारि निवारयांचकार ।

१ II यः पुरस्तात्. २ B C मनोवैक्लव्यादिकं. ३ Cf र॰ गं॰ P. 77.
४ C °स्वरूपशयनीयशिलातलं. ५ C मे. ६ Cf र॰गं॰ P. 79.

जननी मम तेन नालि दूये
मनसः केन स वा निवारणीयः ॥

[ ]

अत्र द्वारि समागतस्य कृष्णस्य तिरस्कारेऽपि निरुपद्रवचेतोरूपस्थानेऽवस्थापनात्मकेष्टसिद्धिर्विभावः। वदनोल्लासादय आक्षिप्ता अनुभावाः॥

१३. चेतोनिमीलनं व्रीडा न्यक्काररागस्तवादिभिः।

[स० कं० V. 193]

वस्त्राङ्गुलीयकस्पर्शभूरेखाधोमुखादिकृत् ॥ ७८ ॥

[Whole in का० प्रदीप IV]

तथा च स्त्रीणां सुरतचिह्नप्राकट्यपुरुषमुखावलोकनादेः पुंसां च प्रतिज्ञाभङ्गपराभवस्तवादेरुत्पन्नो वैवर्ण्याधोमुखत्वादिकारणीभूतश्चित्तवृत्तिविशेषो व्रीडा ॥

दुराचारादिभिर्व्रीडा धार्ष्ट्याभावोऽभिधीयते ॥ ७९ ॥

इति केचित्। तन्न। अभावस्य चित्तवृत्तावसमावेशात्॥

उदाहरणं यथा मम—

स्वेदः कपोले श्लथता दुकूले
किमेतदित्यालिगिरं निपीय।
दरानमत्कन्धरबन्धुराङ्गी
तूष्णीं कुरङ्गीनयनेयमास्ते ॥

[ ]

अत्र विपरीतसुरतचिह्नप्रकाशो विभावः। मुखानमनाद्यनुभावः॥

१४. मात्सर्यद्वेषरागादेश्चापलं त्वनवस्थितिः।

तत्र भर्त्सनपारुष्यस्वच्छन्दाचरणादयः ॥ ८० ॥

[Quoted in का० प्रदीप IV]

आत्मप्रकाशनपरा चेष्टा चपलतोच्यते ॥ ८१ ॥

[स० कं० V. 193; quoted in का० प्रदीप IV]

---

१ Cf र० गं० P. 78. २ C reads दुराचारा...असमावेशात् before. तथा च.

इति केचित् ॥

अमर्षप्रातिकूल्येर्ष्यारागद्वेषाश्च मत्सरः ।
इति यत्र विभावाः स्युरनुभावस्तु भर्त्सनम् ॥ ८२ ॥
वाक्पारुष्यं प्रहारश्च ताडनं वधबन्धने ।
तच्चापलमनालोच्य कार्यकारित्वमिष्यते ॥ ८३ ॥ इति ।
[Quoted in र० गं० P. 96]

[19b] एवं च अमर्षादिजन्मा वाक्पारुष्यादिकारणीभूता चित्तवृत्तिश्चपलता ॥

उदाहरणम्—

अहितव्रत पापात्मन्मैवं मे दर्शयाननम् ।
आत्मानं हन्तुमिच्छामि येन त्वमसि भावितः ॥
[र० गं० p. 97]

एषा भगवदनुरक्तिविघटनोपायमपश्यतः प्रह्लादं प्रति हिरण्यकशिपोरुक्तिः । भगवद्द्वेषोत्थापितः पुत्रद्वेषोऽत्र विभावः । आत्मवधेच्छा परुषवचनं चानुभावः । न चामर्ष एवात्र व्यज्यते इति वाच्यम् । सदैव भगवदनुरागिणि प्रह्लादे हिरण्यकशिपोरमर्षस्य चिरकालसंभृतत्वेनात्मवधेच्छाया इदंप्रथमतानुपपत्तेः । इदंप्रथमकार्यस्य चेदंप्रथमकारणप्रयोज्यतया प्राचीनवृत्तिविलक्षणाया एव वृत्तेश्चपलताख्यायाः सिद्धेः । न चामर्षप्रकर्षस्यात्मवधेच्छादिकारणमभिव्यज्यतामिति वाच्यम्; प्रकर्षस्यापि स्वाभाविकविलक्षणतायाः आवश्यकता । तस्यैव चपलतापदार्थत्वात् ॥

१५. मनःप्रसादो लाभादेर्हर्षोऽश्रुस्वेदगद्गदाः ॥ ८४ ॥
[Quoted in का० प्रदीप IV]

देवभर्तृगुरुस्वामिप्रसादः प्रियसंगमः।
मनोरथाप्तिरप्राप्यमनोहरधनागमः ॥ ८५ ॥
तयोत्पत्तिश्च पुत्रादेर्विभावो यत्र जायते ।
नेत्रवक्त्रप्रसादश्च प्रियोक्तिः पुलकोद्गमः ॥ ८६ ॥
अश्रुस्वेदादयश्चानुभावा हर्षं तमादिशेत् ॥ ८७ ॥
[Quoted in र० गं० p. 77]

तथा चेष्टप्राप्त्यादिजन्मा सुखविशेषो हर्षः ॥

१ Cf र० गं० P. 96. २ Cf र० गं० P. 76.

उदाहरणम्—

जनाय शुद्धान्तचराय शंसते
कुमारजन्मामृतसं[20a]मिताक्षरम् ।
अदेयमासीत्त्रयमेव भूपतेः
शशिप्रभं छत्रमुभे च चामरे ॥

[ रघु॰ III. 16 ]

अत्र पुत्रजन्मश्रवणं विभावः । सर्वस्वदानमनुभावः ॥

१६.　आवेगो राजविद्रावरत्यादेः संभ्रमो मतः ।
तत्र विस्मरणं स्तम्भः स्वेदः कम्पः स्खलद्गतिः ॥ ८८ ॥

[ Quoted in का॰ प्रदीप IV ]

एवं चानर्थातिशयजनिता चित्तस्य संभ्रमाख्या वृत्तिरावेगः ॥

उदाहरणम्—

उत्तादृश कथमुदेति मनुष्यलोके
तेजोऽद्भुतं निरभिसन्धि न तावदेवत् ।
तान्येव चास्य चरितानि दशाननस्य
धिक् चिन्तया रजनिरक्षिषु नः प्रभाता ॥

[　　　　]

अत्र रामपराक्रमश्रवणं विभावः । स्थैर्याभावोऽनुभावः । न चात्र चिन्तापि व्यज्यते इति वाच्यम् । तस्याः शब्दोपात्तत्वेन व्यज्यमानाया अपि चमत्काराजनकत्वात् । रावणदुर्ललितरामचरितयोर्युगपद्दर्शनेनोद्वेगस्यैव प्रत्ययात् ॥

१७.　क्रियास्वपाटवं जाड्यं चिन्तोत्कण्ठाभयादिभिः ॥ ८९ ॥

[ स॰ कं॰ V. 240 ]

इत्येके । अन्ये तु—

अप्रतिपत्तिर्जडता स्यादिष्टानिष्टदर्शनश्रुतिभिः ।
अनिमिषनयननिरीक्षणतूष्णींभावादयस्तत्र ॥९०॥ इति ॥

[ Quoted in का॰ प्रदीप IV ]

---

१ Cf र॰गं॰ P. 93. २ C om. from तस्याः down to °प्रत्ययात्. ३ Cf र॰ गं॰ P. 76.

कार्याविवेको जडता पश्यतः शृण्वतोऽपि वा ।
तद्विभावाः प्रियानिष्टदर्शनश्रव[20 b]णे रुजः ॥९१॥

अनुभावास्त्वमी तूष्णींभावविस्मरणादयः ।
सा पूर्वं परतो वा स्यान्मोहादिति विदां मतम् ।९२॥

[ Both कारिकाs quoted in र० ग० pp. 93-94]

तथा च—उत्कण्ठाभयविरहेष्टानिष्टदर्शनश्रवणादिजन्या अवश्यकर्तव्यार्थप्रतिसंधानविकला चित्तवृत्तिर्जडता ॥

तदाहरणं यथा मम—

गाढान्धकारगिरिगह्वरमाश्रितानां
यत्राङ्कसंस्मरणशुष्कमुखाम्बुजानाम् ।
दैवोच्छ्रितोहिमगिरिकान्तिकृतः प्रकाशः
शून्यां प्रतिक्षितिभुजामकरोदवस्थाम् ॥
[ ]

अत्र स्वङ्कस्मरणं विभावः। अनिमिषनिरीक्षणादय आक्षिप्ता अनुभावाः॥

१८. गर्वोऽभिजनलावण्यधनैश्वर्यादिभिर्मदः ।
सविलासाङ्गवीक्षाविनयावज्ञादिकृत्तु सः ॥९३॥

[ Quoted in का० प्रदीप IV ]

तथा च—रूपधनविद्यावलादिप्रयुक्तस्वोत्कर्षज्ञानाधीनं परावहेलनं गर्वः॥

तदाहरणं मम—

न कदापि भजामि भूषणानि
प्रथिता वा मम चातुरी न कापि ।
तरलः स तथाप्यलं मदङ्गे
वनमाली मुहुरालि वद्धदृष्टिः ॥
[ ]

अत्र सौन्दर्यप्रयुक्तं स्वोत्कर्षभावनं विभावः। अङ्गवीक्षादयोऽनुभावाः॥

यथा वा मम—

---

१ Cf र० ग० p. 93. २ B दैवोचिताहिमगि°. ३ Cf र० ग० P. 84.

पाण्डित्यं कविताकलाकुशलता शौर्यं तथाऽन्ये गुणाः
सन्तु प्राणभृतामथापि भवनद्वारप्रदेशे मम ।
वेल्लद्वाजिगजेन्द्रराजिगहने रत्नप्रभाभासुरे
दुष्पूरोदरपूरणाय विवशास्तिष्ठन्त्यमी सर्वदा ॥

[ ]

अत्र धनं विभावः । [21a]पण्डिताद्यवहेलनमनुभावः॥

यथा वा मम—

साहित्यपाथोनिधिमाथमन्थः श्रीतर्कविद्यागहनैकसिंहः ।
कवित्वपीयूषगुणाम्बुवाहः सोऽहं कथं मूर्खगणैर्वदिष्ये ॥

[ ]

अत्र विद्या विभावः । मूर्खावज्ञासंभाषणमनुभावः ॥

यथा वा—

द्विरदानिव दिग्विभावितांश्चतुरस्तोयनिधीनिवायतः ।
प्रसहेत रणे तवानुजान् द्विषतां कः शतमन्युतेजसः ॥

[ किरात॰ II. 23 ]

अत्र बलं विभावः । परावज्ञादिकमनुभावः॥

१९. प्रारब्धकार्यासिद्ध्यादेर्विषादः सत्त्वसंक्षयः ।
निःश्वासोच्छ्वासहृत्तापसहायान्वेषणादयः ॥९४॥

[ Quoted in का॰ प्रदीप IV ]

इष्टासिद्धिराजगुर्वाद्यपराधादिजन्योऽनुतापो विषादः ॥

उदाहरणम्—

भस्माङ्कुरेति खुरलीकलहे कुमार-
मद्याक्षिपन् परुषरोषमदान्धचेताः ।
दृष्टोऽस्मि यत्कृतमिथोहसितं शिवाभ्यां
तथापभङ्गमपि हा मसृणः शृणोमि ॥

[ ]

१ The first line of this stanza is identical with the first line in the author's धर्मविजय नाटक, I. 31. २ C °पाथमन्थः ३ C सत्तर्क°. ४ का॰प्रदीप °यान्वेषणादिहृत्. ५ Cf र॰गं॰P.92. ६ C खुरलीकलहेऽपि; A has marg. note: भस्मधारिणि शिवे लक्षणया तस्याङ्कुरः पुत्रः, खुरलीकलहे शस्त्राभ्यासकलहे, मसृणः निर्लज्जः.

अत्र रामवधासिद्धिर्विभावः । निःश्वासादयोऽनुभावाः ॥

२०. कालाक्षमत्वमौत्सुक्यं रम्येच्छारतिसंभ्रमैः ।

तत्रोच्छ्वासत्वराश्वासहृत्तापस्वेदविभ्रमाः ॥९५॥

[ Quoted in का॰ प्रदीप IV ]

यदाहुः—

संजातमिष्टविरहादुद्दीप्तं प्रियसंस्मृतेः ।

निद्रया तन्द्रया गात्रगौरवेण च चिन्तया ।

अनुभावितमाख्यातमौत्सुक्यं भावकोविदैः ॥९६॥ इति ॥

[ Quoted in र॰ ग॰ p. 93 ]

तथा च—अधुनैवास्य लाभो ममास्त्विति इच्छा औत्सुक्यम् ।

यथा—

निर्वेतद्धास्यसंरोधमुक्तवाक्स्यतारकम् ।

कदा नयननीलोत्पलमालोकेयं मृगीदृशः ॥

[ र॰ गं॰ p. 93]

कान्ताविरहोऽत्र विभावः । चिन्तादयोऽनुभावाः ॥

२१. निद्रा [ 21 ] व्यापारवैमुख्यमिन्द्रियाणां श्रमादिभिः ।

[ स॰ क॰ V, 244 ]

तत्र जृम्भाङ्गभङ्गाक्षिमीलनोच्छ्वासनादयः ॥९७॥

[ Full कारिका quoted in का॰प्रदीप IV ]

श्रमादिप्रयोज्यं चेतःसंमीलनं निद्रा ॥

उदाहरणम्—

सा मदागमनबृंहिततोषा

जागरेण गमिताखिलदोषा ।

बोधिताऽपि [21b] बुबुधे मधुपैर्न

प्रातराननजसौरभलुब्धैः ॥

[ र॰ गं॰ p. 85 ]

---

१ Cf र॰ गं॰ P. 92. २ C नियतस्वाप्ययरोध° ३ B C °लीलाब्जम्.
४ Cf र॰ गं॰ P. 85.

जागरणश्रमोऽत्र विभावः । मधुपैर्बोधनेऽपि बोधाभावोऽनुभावः ।

२२ आवेशात्यन्तदुःखादेरपस्मारस्तथाविधः ॥९८॥

[ का० प्रदीप IV ]

मते क्षेपस्त्वपस्मारो ग्रहावेशादिसंभवः ॥९९॥ इति केचित् ॥

वियोगशोकभयजुगुप्सादीनामतिशयाद् ग्रहावेशादेश्चोत्पन्नो व्याधिविशेषरूपश्चित्तवृत्तिविशेषोऽपस्मारः । व्याधिशब्देनास्य वाच्यत्वेऽपि विशेषाकारेण पुनः कथनं बीभत्सभयानकयोरस्यैव व्याधेरङ्गत्वं नान्यस्येति स्फोरणाय । विप्रलम्भे तु व्याध्यन्तरस्यापि च ॥

उदाहरणम्—

हरिमागतमाकर्ण्य मथुरामन्तकान्तकम् ।
कम्पमानः श्वसन् कंसो निपपात महीतले ॥

[ र० ग० p. 96 ]

अत्र भयं विभावः । कम्पनिःश्वसनादयोऽनुभावाः ॥

विरोधिभावान् पूर्वस्यापस्मृतिर्विस्मृतिर्भवेत् ।
ध्यानजाड्यप्रमोदाधिपरितापादिकृत्तु सा ॥१००॥

[ का० प्रदीप IV ]

इत्यन्ये ॥

२३. स्वप्नो निद्रामुपेतस्य विषयानुभवस्तु यः ।
कोपावेगभयग्लानिसुखदुःखादिकारकः ॥१०१॥

[ Quoted in का० प्रदीप IV ]

तथा चानुभवविशेषः स्वप्नः ॥

उदाहरणम् यथा मम—

विमुखेऽपि विधातरि प्रभाते
मम निद्रा सखि समुदगात् तथासीत् ।
स यथा शतधा सरोजनाभः
समुपालम्भि मया दयाविहीनः ॥

[ ? ]

१ C रात्रिजागरणश्रम २ C बोधनाभावो ३ Cf र० गं० P. 96 ४ Cf र० गं० P. 96 ५ B विशेषणाकारेण ६ B C पूर्वस्याप्यपस्मृति ७ C तदासीत

उदाहरणम्—

अवगम्य गुह्यकगणादिति त-
न्मनसः प्रियं प्रियसुतस्य तपः ।
निजुगोप हर्षमुदितं मघवा
नयवर्त्मगाः प्रभवतां हि धियः ॥
[ ? ]

अत्र प्रयोजनविशेषो विभावः । विषयान्तरसंचारोऽनुभावः ॥

२७. दृष्टेऽपराधदौर्मुख्यचौर्यैश्चण्डत्वमुग्रता ।
अत्र स्वेदशिरःकम्पताडनातर्जनादयः ॥१०५॥
[ का० प्रदीप IV ]

उदाहरणं यथा मम—

गुरुर्गरीयान् दुरवस्थितः कृत-
स्त्वया ममायं भगिनीपतेः कृते ।
ज्वलत्ययं मे परशुर्भयेन ते
पदं किमात्मन्यधुनापि नार्प्यते[1] ॥
[ ? ]

अत्र मातृकर्तृकः कार्तवीर्यसभाजनरूपोऽपराधो विभावः । तर्जनादयोऽनुभावाः ॥

२८. भ्रान्तिच्छेदोपदेशाभ्यां शास्त्रादेस्तत्त्वधीर्मतिः ।
स्मेरता धृतिसंतोषौ बहुमानस्तथात्मनि ॥१०६॥
[ Quoted in का० प्रदीप IV ]

उदाहरणं यथा [22b] मम—

पुत्राः कलत्राण्यथ बन्धवोऽपि
विमुद्रिते नेत्रयुगेऽन्तकाले ।
निष्कासयिष्यन्ति यदात्मगेहा-
द्धर्मस्तदा मे भविता सहायः ॥
[ ]

---

1 B भाव्यते.

अन्ये तु उत्साहोत्थापितायास्तस्या दयावीरस्थायित्वमित्यत्र तद्वर्णना-नौचित्यमित्याहुः। न चात्र संचारित्वाद्वर्णनं फलवदिति वाच्यम्। स्थाय्यन्तरसाधारणत्वात्। तेऽपि हि क्वचन संचारिणः ॥

तदुक्तम्—

शृङ्गारवीरयोर्हासो वीरे क्रोध[23a]स्तथा मतः।
शान्ते जुगुप्सा कथिता व्यभिचारितया पुनः ॥११०॥
[का० प्रदीप IV]

तथा च—[1]विरहरोगादिजन्या मूर्च्छारूपा मरणप्रागवस्था मरणम्। न चात्र प्राणवियोगात्मकं मरणमुचितं ग्रहीतुम्। चित्तवृत्त्यात्मकेषु भावेषु तस्याप्रसक्तेः। भावेषु च सर्वेषु कार्यकालवृत्तितया प्राणशरीरसंयोगस्य हेतुत्वात् ॥

तदाहरणम्—

दयितस्य गुणाननुस्मरन्ती
शयने संप्रति या विलोकितासीत्।
अधुना खलु हन्त सा कृशाङ्गी
गिरमङ्गीकुरुते न भाषितापि ॥
[र० ग० p. 91]

प्रियविरहोऽत्र विभावः। वचनविरामोऽनुभावः ॥

३२. गर्जितादेर्मनःक्षेपस्त्रासोऽत्रोत्कीम्पतादयः ॥१११॥
[Quoted in का० प्रदीप IV]

यदाहुः—

औत्पातिकैर्मनःक्षेपस्त्रासः कम्पादिकारकः ॥११२॥ इति।
[Quoted in र० ग० p. 86]

तथा च—भीरोर्घोरसत्त्वदर्शनस्फूर्जथुश्रवणादिजन्मा चित्तवृत्तिविशेषस्त्रासः। अनुभावाश्चास्य रोमाञ्चकम्पस्तम्भभ्रमादयः ॥

---

१ C तद्वर्णनमत्रानुचितम्. २ Cf र० ग० P. 90-91. ३ C adds मुख्यं before मरणम्. ४ C breaks off from वचनवि. ५ B and काव्यप्रदीप-त्रास. कम्पादिकारक. ६ Cf र० ग०P 86.

उदाहरणम्—

आलीषु केलीरभसेन बाला मुहुर्ममालापमुपालपन्ती।
आरादुपाकर्ण्य गिरं मदीयां सौदामिनीयां सुषमामयासीत्[1]॥
[ र० गं० p. 86 ]

अत्र परस्या स्ववचनाकर्णनं विभावः। पलायनमनुभावः॥

अथ लज्जायाः प्राधान्येन प्रतीतौ तु इदं पद्यमुदाहरणं यथा—

मा कुरु कशां कराब्जे करुणावति वेपते मम स्वान्तम्।
खेलन्न जातु गोपैरम्ब विलम्बं करिष्यामि॥ इति।
[ र० गं० p. 86 ]

३२. ऊहो वितर्कः संदेहे भूशिरोऽङ्गुलिनर्तकः॥११२॥
[ Quoted in का० प्रदीप IV ]

संदेहादनन्तरं जायमान ऊहो वितर्कः। स च निश्चयानुकूलः॥

उदाहरणम्—

निशि भानुरुदेति शङ्कया दुरपत्येन मयाँ कलङ्कितः।
किरति स्फुटमन्य[23b]था कथं करमङ्गारसमं समन्ततः॥
[ ]

चन्द्रमुद्दिश्य तापजनकोऽयं भानुर्न वेति विरहिणो राघवस्य संदेहोऽत्र विभावः। भ्रूविक्षेपादय आक्षिप्ता अनुभावाः॥

अथ कथमस्य सङ्ख्यानियमो मात्सर्योद्वेगदम्भेर्ष्याविवेकनिर्णयक्लैब्य-क्षमाकुतुकोत्कण्ठाविनयसंशयधाष्ट्यादीनामपि तत्र तत्र लक्ष्येषु दर्शनादिति चेन्न। उक्तेष्वेवैषामन्तर्भावेन संख्यान्तरानुपपत्तेः। असूयातो मात्सर्यस्य, त्रासावेगाभ्यामुद्वेगस्य, अवहित्थातो दम्भस्य, अमर्षादीर्ष्यायाः, मतेर्विवेकनिर्णययोः, दैन्यात् क्लैब्यस्य, धृतेः क्षमायाः, औत्सुक्यात्कुतुकोत्कण्ठयोः, लज्जाया विनयस्य, तर्कात् संशयस्य, चापलाद्धाष्ट्यस्य च भेदाभावात्। सूक्ष्मेऽपि भेदे नान्तरीयकतया तदनतिरिक्तस्यैवाध्यवसायात्। संभवति मुनिवचने उच्छृङ्खलतया अनौचित्यात्॥

---

१ Cf र० गं० P. 86. २ A has marg. note पलायमाना आसीत् on सौदामिनीयां सुषमामयासीत्. ३ Cf र० गं० p. 91. ४ B यथा. ५ Cf र० गं० P. 98. ६ B has marg. note आवश्यकतया on नान्तरीयकतया.

एषु संचारिभावेषु मध्ये केचन केषांचन विभावा अनुभावाश्च भवन्ति। तथा हि—ईर्ष्याया निर्वेदं प्रति विभावत्वमसूयां प्रति चानुभावत्वम्। चिन्ताया निद्रां प्रति विभावत्वमौत्सुक्यं प्रति चानुभावत्वमित्यादि स्वयं विज्ञेयम्॥

अथाभासाः॥

ते च रसाभासभावाभासरूपाः। आभासत्वं चैषां स्थायिभावादीनामनौचित्यप्रवर्तितत्वेन। तत्र रतेरनौचित्यम्—गुरुपत्नीविषयायाः, नायकनायिकयोर्मध्ये एकमात्रनिष्ठायाः, पश्वादीनां च परस्परनिष्ठायाः, एकनायिकाया बहुनायकविषयाया इत्यादि लोकव्यवहारात् ज्ञेयम्। तत्र शृङ्गारवत् शृङ्गाराभासोऽपि द्विधा। संयोगाभासो वियोगाभासश्च।

क्रमेणोदा[24a]हरणानि—

सर्वेऽपि विस्मृतिपथं विषयाः प्रयाता
विद्या प्रमादगलिता विमुखीबभूव।
सा केवलं हरिणशावकलोचना मे
नैवापयाति हृदयाद् गुरुधर्मपत्नी।
[ र॰ ग॰ p. 102 ]

ब्रह्मन्नध्ययनस्य नैष समयस्तूष्णीं बहिः स्थीयतां
स्वल्पं जल्प बृहस्पते जडमते नैषा सभा वज्रिणः।
वीणां संहर तुम्बुरो स्तुतिकथालापैरलं नारद
सीतारल्लकभल्लभग्नहृदयः स्वस्थो न लङ्केश्वरः॥
[ र॰ गं॰ p. 53 ]

अत्रावियुक्तानि रथाङ्गनाम्ना-
मन्योन्यदत्तोत्पलकेसराणि।
द्वन्द्वानि दूरान्तरवर्तिना ते
मया प्रिये सस्पृहमीक्षितानि॥
[ रघु॰ XIII.31 ]

स्तुमः कं[3] वामाक्षि क्षणमपि विना यं न रमसे
विलेभे कः प्राणान् रणमखमुखे यं मृगयसे।

---

१ र॰ ग॰ विद्यापि खेदकलिता. २ र॰ गं॰ अधिदेवतेव. ३ B किं.

सुलग्ने को जातः शशिमुखि यमालिङ्गसि बलात्
तपःश्रीः कस्यैषा मदननगरि ध्यायसि तु यम् ॥
[ Quoted in का० प्र० IV. 48 ]

शतेनोपायानां कथमपि गतः सौधशिखरं
सुधाफेनस्वच्छे रहसि शयितां पुष्पशयने।
विबोध्य क्षामाङ्गीं चकितनयनां स्मेरवदनां
सनिःश्वासं श्लिष्यत्यहह सुकृती राजरमणी ॥
[ र० गं० p. 99 ]

अयं संयोगाभासः ॥

सोमाय कुप्यन्निव विप्रयुक्तः
स सोममाचामति दूयमानः।
नामापि जागर्ति हि यत्र शत्रो-
स्तेजस्विनस्तं कतमे सहन्ते ॥
[ नैषधीय० VIII. 74 ]

अयं वियोगाभासः ॥

एवं कलहशीलकुपुत्राद्यालम्बनतया वीतरागादिनिष्ठतया च चर्व्यमाणः शोकः ब्रह्मविद्यानधिकारिशूद्रादिगतत्वेन निर्वेदः। पित्राद्यालम्बनत्वेन वा क्रोधोत्साहौ। [24b]ऐन्द्रजालिकाद्यालम्बनत्वेन विस्मयः। गुर्वाद्यालम्बनतया च हासः। महावीरगतत्वेन च भयम्। यज्ञीयपशुवसामांसासृगाद्यालम्बनत्वेन चर्व्यमाणा जुगुप्सा च रसाभासाः ॥

भावाभासो यथा—

राकासुधाकरमुखी तरलायताक्षी
सा स्मेरयौवनतरङ्गितविभ्रमास्या।
तत्किं करोमि विदधे कथमत्र मैत्रीं
तत्स्वीकृतिव्यतिकरे क इवाभ्युपायः ॥
[ Quoted in का० प्र० IV. 49 ]

अत्र रतेर्व्यभिचारिभूता चिन्ताऽनौचित्यप्रवर्तिता। नायिकाया अननुरक्तत्वेन रतेरनुत्कृष्टतया तद्व्यभिचारिणोऽपि तथात्वात् ॥

1 II and का० प्रकाश—°विभ्रमाढ्यौ.

यथा वा मम—

भुजङ्गमालापमुधारसेन
रसेन काचित् परितर्पयन्ती ।
दैवादुपेता सविधे सपत्नीं
निरीक्ष्य त निन्दति सा स्म सद्य ॥
[ ]

अत्रासूयाऽनौचित्यप्रवर्तिता ॥

यथा वा मम—

मातङ्गकुम्भतटतुङ्गपयोधराणा-
मेणीदृशां भवति यत्र मनोहराणाम् ।
गङ्गातटे निकट एव समागम सा
वाराणसी रसिक शर्मभरैकहेतु ॥
[ ]

अत्र कीदृशी वाराणसीति तीर्थविषयके कस्यचित् प्रश्ने युवतिजन-समागमाधारत्वेनोत्तरमूक्ति तादृश स्मरणमनौचित्यप्रवर्तितम् ॥

यथा वा—

नैव न प्रियतमोभयथासौ
यन्मु न वृणुते वृणुते वा ।
एक्वो हि धिगमूमगुणज्ञा
मन्यत कथमद् प्रतिलम्भ ॥
[ नैषधीय० V 69 ]

अत्र रतेरनौ[25a]चित्येन तत्सहचारिणोर्विषादचिन्तयोराभासता ॥

यथा वा—

वभ्रितराभ्यामुपगूढनाल
मालोलपत्राभिहतद्विरेफम् ।
रजोभिरन्त परिवेषवन्धि
लीलारविन्द भ्रमयाचकार ॥
[ रघु० VI 13 ]

अत्र स्नेहाभासस्तेन तत्सहचारिणश्चापल्यस्याभासता । एवमन्येऽपि उदाहार्याः ॥

भावशान्त्यादिरपि भावा एव। तदुक्तम् –

भावस्य शान्तिरुदयः संधिः शवलता तथा।

[का० म० IV. 36]

चर्व्यमाणो रसाङ्गत्वाद्भावान्नैवातिरिच्यते ॥११४॥ इति ॥

[ ? ]

संधिरेककालमेव तुल्यकक्ष्ययोरास्वादः। शवलता तु कालभेदेन निरन्तरतया पूर्वपूर्वोपमर्दादिना। न च भावस्य शवलतायाः शान्त्युदयाभ्यामविशेषः। शान्तेरुदयस्य वा एकैकस्यास्वादे तद्वद्द्वयोपगमात् ॥

तत्र भावशान्तिर्यथा—

तस्याः सान्द्रविलेपनस्तनतटप्रश्लेषमुद्राङ्कितं
किं वक्षश्चरणानतिव्यतिकरव्याजेन गोपाय्यते।
इत्युक्ते क्व तदित्युदीर्य सहसा तत्संप्रमार्ष्टुं मया
सा श्लिष्टा रभसेन तत्सुखवशात्तन्व्यापि तद्विस्मृतम् ॥

[Quoted in का० प्र० IV. 50]

अत्र कोपस्य शान्तावेव चमत्कारविश्रामः ॥

यथा वा मम—

अम्बुपूरपरिखातदुर्गमे
स्थाप्य तुङ्गकुचशैलसंकटे।
यत्र धुन्वति धनुः सुदुःखिताः
पालयन्ति पृथुकानरिस्त्रियः ॥

[ ? ]

अत्र वैरिवनिताकर्तृकस्वबालहृदयावधा[25 b]रणरोदनपूर्वकं शत्रुपुत्राणां जीवित्ववर्णनेन राज्ञः क्रोधोत्साहयोः शान्तिर्व्यज्यते ॥

यथा वा मम—

अद्य दैववशतोऽभवन्मम क्रूरवानरवरेण संगरः ॥
एवमुक्तवति पान्थतां प्रिये सुन्दरीनयनशोणिमाभजत् ॥

[ ]

१ B संश्लिष्टा. २ B कोपशान्तावेव. ३ B न्यस्य.

अत्र सुन्दरीनेत्रशोणिम्नः पान्थत्ववर्णनेन कोपस्य शान्तिर्व्यज्यते ॥ एवमन्येऽपि उदाहार्याः ॥

भावोदयो यथा—

एकस्मिन् शयने विपक्षरमणीनामग्रहे मुग्धया
सद्यो मानपरिग्रहग्लपितया चाटूनि कुर्वन्नपि ।
आवेगादवधीरितः प्रियतमस्तूष्णीं स्थितस्तत्क्षणं
मा भूत्सुप्त इवेत्यमन्दवलितग्रीवं पुनर्वीक्षितः ॥
[ अमरु० २२; quoted in का०प्र० IV. 51 ]

अत्रौत्सुक्यस्योदयः ॥ यथा वा मम—

मानिनीमनुनयन् सुचाटुभि-
र्वीक्ष्य कोपकुटिलां च तद्भ्रुवम् ।
यद्धनुःस्मरणजातवेपथु-
र्जाड्यमेत्यरिजनः पदे पदे ॥
[ ]

अत्र त्रासस्योदयः ॥ यथा वा मम—

यस्य खड्गगतकालिमा द्विषा-
माननेषु वितनोति कालताम् ।
एतदेव यहु चित्रमेषु यत्
श्वैत्यमर्जयति नेत्रशोणिमा ॥
[ ! ]

अत्र भयस्योदयः ॥ यथा वा मम—

पीतमस्तदयमन्यकान्तया
वीक्ष्य मुग्धमधरं नतभ्रुवा ।
चुम्बितुं त्वरितयापि केवलं
कान्तकान्तवदनं विलोक्यते ॥
[ ]

अत्र चुम्बनत्वराविशिष्टाया नायि[29a]कायाश्चुम्बनं विहाय केवल-मुखावलोकनवर्णनेन कोपस्योदयो व्यज्यते ॥

---

१ B अनुनयन्. २ A has marg note : भ्रूदर्शनात् यद्धनुः स्मर्यते.
३ B भयस्योदयः.

यथा वा मम—

वालुकाविहितभित्तिभेदनं
कर्तुमाश्रितबृहच्छरासने ।
यत्र नव्यवलयादिधारणं
नाचरन्ति रिपुभूपतिस्त्रियः ॥
[ ? ]

अत्र कृतेऽपि वलयधारणेऽनुपदमेवास्मत्स्वामिनां वधस्य राज्ञा करिष्यमाणत्वात् तद् वृथेति मतेरुदयो व्यज्यते ॥

यथा वा मम—

बाणभिन्ननिजभालसंस्थितां
वीक्ष्य खड्गमुकुरे विधेर्लिपिम् ।
राज्यभोगविनिवृत्तचेतसः
शत्रवो दधति यस्य वश्यताम् ॥
[ ]

अत्र शत्रुनिष्ठयोरुत्साहस्य शान्तिर्व्यज्यते । एवमन्यदपि उदाहार्यम् ॥

भावसंधिर्यथा—स चान्योन्यानभिभूतयोरन्योन्याभिभावनयोग्ययोर्भावयोः सामानाधिकरण्यरूपः ॥

उत्सिक्तस्य तपःपराक्रमनिधेरभ्यागमादेकतः
सत्संगप्रियता च वीररभसोत्फालश्च मां कर्षतः ।
वैदेहीपरिरम्भ एष च मुहुश्चैतन्यमामीलयन्
आनन्दी हरिचन्दनेन्दुशिशिरः स्पर्शो रुणद्ध्यन्यतः ॥
[ महावीरचरित II. 22; quoted in का० प्र० IV.52 ]

अत्र पूर्वार्धे सम्भ्रमात्मक आवेगः, उत्तरार्धे हर्षः । अनयोस्तुल्यमेवास्वादः ॥

शबलता यथा—

क्वाकार्यं शशलक्ष्मणः क्व च कुलं भूयोऽपि दृश्येत सा
दोषाणां प्रशमाय नः श्रुतमहो कोपेऽपि कान्तं मुखम् ।

---

१ B °च्छरासन°. २ B om. तत्. ३ Cf र० गं० P. 103.

किं वक्ष्यन्त्यपकल्मषाः कृतधियः स्वप्नेऽपि सा दुर्लभा
चेतः स्वास्थ्यमुपेहि[26b] कः खलु युवा धन्योऽधरं धास्यति ॥
[ Quoted in का॰ प्र॰ IV. 53 ]

अत्र क्वाकार्यमित्यादौ वितर्कः, भूयोऽपीत्यौत्सुक्यम्, दोषाणामिति मतिः, कोपेति स्मृतिः, किं वक्ष्यन्तीति शङ्का, स्वप्नेऽपीति दैन्यम्, चेतः स्वास्थ्यमिति धृतिः। कः खल्विति चिन्ता। पूर्वपूर्वोपमर्देन प्रतीयमाना शबलता चमत्कारभूमिः ॥

यथा वा—

पापं हन्त मया हतेन विहितं सीतापि यद्यापिता
सा मामिन्दुमुखी बने बत विना किं जीवितं धारयेति ।
आलोकेय कथं मुखानि कृतिनां किं ते वदिष्यन्ति मां
राज्यं यातु रसातलं पुनरिदं न प्राणितुं कामये ॥
[ र॰ गं॰ p. 104 ]

अत्र मत्यसूयाविषादस्मृतिवितर्कव्रीडाशङ्कानिर्वेदानां शबलता ॥

यथा वा—

पश्येत् कश्चिच्चपल चल रे का त्वराहं कुमारी
हस्तालम्बं वितर ह ह हा व्युत्क्रमः कासि यासि ।
इत्थं भूमीपरिवृढ भवद्विद्विषोऽरण्यवृत्तेः
कन्या कञ्चित् फलकिसलयान्यादददानामिधत्ते ॥
[ का॰ प्र॰ V. 123 ]

अत्र शङ्कासूयाधृतिस्मृतिश्रमदैन्यमत्यौत्सुक्यानां शबलता ॥

यथा वा मम—

गन्तव्यं पुनरेव तत्र ह ह ह हा सा दुःखिता मां विना
बुद्धेः कोऽयमुपप्लवः परमियं स्वस्था कथं स्थास्यति[1] ।
प्रत्यावृत्य गते हसिष्यति जनः सर्वोऽपि लोकोत्तरः
स्नेहः सारससारसोदरदृशस्याः पुनस्तादृशः ॥
[ ? ]

1 B भ्यास्यति.

अत्र गन्तव्यमित्यौत्सुक्यम्। तत्रेति स्मृतिः। ह ह हेति खेदः। दुःखितेति दैन्यम्। बुद्धेरिति धैर्यम्। परमिति चिन्ता। प्रत्यावृत्त्येति शङ्का। लोकोत्तर इत्यावेगः। तादृश इति स्मृतिः। एतेषां भावानां शाबल्यम्॥

अत्र—भावशबलत्वं भावानां बा[27a]ध्यबाधकभावापन्नानामुदासीनानां वा व्यामिश्रणम्। एकचमत्कृतिजनकज्ञानविषयत्वमिति यावत्॥

तदुक्तम्—

नारिकेलरसक्षीरसिकताजलमिश्रणे।
विलक्षणो यथास्वादो भावानां संहतौ तथा॥ ११४॥

[Quoted in र॰गं॰ p. 104]

¹अत्रेदं बोध्यम्—यैं एते भावशान्त्युदयसंधिशबलताध्वनय उदाहृतास्तेऽपि ध्वनय एव। विश्राम्यमानतया चर्व्यमाणेष्वित्र अस्वस्वत्वच्छिन्नत्वविनश्यदवस्थात्वसंधीयमानत्वपरस्परव्यामिश्रत्वैः प्रकारैश्चर्व्यमाणेषु भावेष्वेव प्राधान्यस्यौचित्यात् चमत्कृतेस्तत्रैव विश्रान्तेः। ननु भावस्य शान्त्यादिवत् स्थितिरपि प्रकारः संभवत्येव तत्कथं नोक्त इति चेन्न। भावोक्त्यैव तदुक्तेः। भावस्थितेर्भावाभिन्नत्वात्। ननु व्यभिचारिस्थले नियमतो मुख्यरसस्यावस्थानं तत्कथं भावोदाहरणमेतत्कथं वा भावध्वनित्वं, रसाङ्गत्वेन तेषां गुणीभावादिति चेन्न। रसस्य मुख्यत्वेऽपि आरोपितप्राधान्यस्य भावेषु सत्त्वात्॥

तदुक्तं काव्यप्रकाशकारैः—

मुख्ये रसेऽपि तेऽङ्गित्वं प्राप्नुवन्ति कदाचन॥ ११५॥

[का॰ प्र॰ IV. 37]

नृपमत्रौनुगम्यमाना वैवाह्या इव सेवकाः॥

ते भावा भावशान्त्यादयः। कदाचनेति यदा त एवाङ्गित्वेन विवक्षिताः। प्राधान्याप्राधान्ययोः कविविवक्षाधीनत्वादिति निर्गलितोऽर्थः॥

⁴अत्रेदं विचार्यते। नन्वेतेषु भावेषु किं नाम भावत्वम्। विभावानुभावभिन्नत्वे सति रसव्यञ्जकत्वमिति⁵। विभावानुभावभिन्नेषु रसव्यञ्जकेषु

१ Cf र॰ गं॰ P. 103. २ Cf र॰ गं॰ P. 104. ३ B om. ये.
४ The entire discussion about the definition of भाव consists of stray sentences from र॰ गं॰. ५ B adds इति चेन्न.

रागादिषु अतिव्याप्तेः । अत्रोच्यते—विभावानुभावव्यज्यमाननिर्वेदाद्यन्य-[27b]तमत्वं तत्त्वम् । यदाहुः—'व्यभिचार्यञ्जितो भाव' इति । निर्वेदादीनां च सामाजिकगतानामेव स्थायिभावन्यायेनाभिव्यक्तिः । विभावानुभावौ चात्र व्यञ्जकौ, न त्वेकस्मिन् व्यभिचारिणि ध्वन्यमाने व्यभिचार्यन्तरं व्यञ्जकतयाऽपेक्ष्यते । तस्यैव प्राधान्यापत्तेरित्यास्तां विस्तरः ॥

इति श्रीमच्छुक्लभूदेवविरचिते रसविलासे भावनिरूपणो नाम तृतीयः स्तबकः ॥

## चतुर्थः स्तवकः ।

अथैषामुत्कर्षाधायकत्वेन स्मृता गुणास्तावन्निरूप्यन्ते । तत्सामान्यलक्षणं काव्यप्रकाशे—

> ये रसस्याङ्गिनो धर्माः शौर्यादय इवात्मनः ।
> उत्कर्षहेतवस्ते स्युरचलस्थितयो गुणाः ॥ ११६ ॥ इति ।
> [ का० प्र० VIII. 66 ]

अङ्गिनः शरीरे स्वात्मवत् प्राधान्येन काव्ये स्थितस्य रसस्य धर्माः साक्षात्तदाश्रिता इत्यर्थः । अचलस्थितय इति अपृथक्स्थितयः । अव्यभिचारिस्थितय इति यावत् । अव्यभिचारश्च रसेन तदुपकारेण च । तेन रसं विना ये नावतिष्ठन्ते अवतिष्ठमानाश्चावश्यं रसमुपकुर्वन्तीत्यर्थः । एवं च रसोत्कर्षहेतुत्वे सति रसधर्मत्वं तथात्वे सति रसाव्यभिचारिस्थितित्वं वा गुणसामान्यलक्षणम् । ननु रसधर्मत्वमेषामसिद्धं कथमन्यथा नीरसेऽपि सुकुमारवर्णशालिनि—

> इह समदशकुन्ताक्रान्तवानीरवीरु-
> त्प्रसवसुरभिशीतस्वच्छतोया वहन्ति ।
> फलभरपरिणामश्यामजम्बूनिकुञ्ज-
> स्खलनमुखरभूरिस्रोतसो निर्झरिण्यः ॥
> [ उ०रा० II. 20 ]

इत्यादौ मधुरादिव्यवहारः । रसवत्यपीदृग्वर्णाभाववति 'शून्यं वासगृहम्' इत्यादौ अमधुरादिव्यवहार इति चेत् । उच्यते । शौर्यादयस्तावदात्मनो धर्मा इत्यविवादम् । दृश्यते तु क्वचिदशूरेऽपि आका[28a]रमहत्त्वादियोगिनि शूरत्वव्यवहारः, शूरेऽप्याकारलाघवादियोगिनि अशूरव्यवहारश्च । तत्कस्य हेतोः । अथ कश्चित् शूरव्यवहारविषये विततकृतिदर्शनात् आकार एवास्य शूर इत्यौपचारिकव्यवहाराच्चाभियुक्तानामाकार एवैतादृशः शूरपदवाच्य इति विपर्यासाददूरदर्शिनस्तथा व्यवहरन्ति । तत्त्वज्ञास्तु क्वचित् उपचार इति वक्तव्यम् । हन्तैवं मधुरादिरसोपयोगिनि सुकुमारादि-

---

१ For the discussion on the nature of the गुण compare का०प्रदीप VIII. २ II om. रसस्य ३ B om. च ४ B 'स्वच्छतामावहन्ति'

वर्णयुक्ते मधुरादिव्यवहारात् वर्ण एवायं मधुरादिरित्यौपचारिकव्यपदेशा-भियुक्तानां वर्ण एवैतादृशो माधुर्यभागिति विपर्ययाद्रसपर्यन्तावगाहि-बुद्धिविधुरास्तथा व्यवहरन्ति। तत्त्वज्ञास्तु कश्चित् उपचारादिति तुल्यमेतत्। ननु शौर्यादात्मवृत्तित्ववत् मधुरत्वादीनां रसवृत्तित्वव्यवस्थितावेवं स्यात्, सैव त्वसिद्धा, विनिगमकाभावादिति चेन्मैवम्। भवत्येव विनिगमकाभावो यदि त्वया वर्णमात्राश्रया गुणाः स्वीकर्तुं शक्यन्ते, न त्वेवमविशेषेण रचना-यामपि तदभ्युपगमात्। तथा च रसमात्रवृत्तित्वे लाघवम्, वर्णरचनोभय-वृत्तित्वे तु गौरवम्। यतश्चैवमत एव माधुर्यादयो रसधर्माः समुचितैर्वर्ण-रचनादिभिर्व्यज्यन्ते इति फलितम्॥ ते—

माधुर्यौजःप्रसादाख्यास्त्रयस्ते न पुनर्दश॥११७॥
आह्लादकत्वं माधुर्यं शृङ्गारे द्रुतिकारणम्।
करुणे विप्रलम्भे तच्छान्ते चातिशयान्वितम्॥ ११८॥
[का॰ प्र॰ VIII. 68]

द्रुतिश्चेतसो गलितत्वमिव द्वेषादिजन्यकाठिन्याभावः। तथा च यद्रसेन श्रोतुर्विमनस्कतेव संपद्यते तदा[28b]ह्लादकत्वस्वरूपं माधुर्यमित्यर्थः॥

यदुक्तम्—

गलितत्वमिवाह्लादपदव्या हृदये ददत्।
माधुर्यं नाम शृङ्गारे प्रौढं गाहते गुणः॥ ११९॥
[Quoted in का॰ प्रदीप VIII]

कौसाविन्यत उक्तं शृङ्गारे इति। संभोगे इत्यर्थः। विप्रलम्भेऽति-शयस्य वक्तव्यत्वात्। करुणादौ विशेषमाह—करुणेति। संभोगात् करुणे, तस्माद् विप्रलम्भे, ततोऽपि शान्तेऽतिशयितं माधुर्यम्। इयांस्तु विशेषो यत्—

संभोगे विप्रलम्भे च निःसपत्नं तदिष्यते।
जुगुप्सान्वयाच्छान्तेऽनुविद्धं त्वोजसापि तत्॥१२०॥इति।
[ ]

---

१ B एवैतदो. २ B om. न त्वेवम्. ३ B om. लाघवम्। वर्णरचनोभय-वृत्तित्वे. ४ The whole discussion is found in identical terms in का॰ प्रदीप VIII.

ओजोलक्षणमाह—

दीप्त्यात्मविस्तृतेर्हेतुरोजो वीररसस्थिति।
बीभत्सरौद्ररसयोस्तस्याधिक्यं क्रमेण च ॥ १२१ ॥
[का० प्र० VIII, 69]

दीप्तिस्वरूपा या मनसोऽविविस्तृतिः ज्वलितत्वमिव तथा च यद्वशात् ज्वलितमिव मनो जायते तदोज इत्यर्थः। क्वेदमित्यत आह वीररसस्थिति इति। अस्याधिकरणान्तरमाह बीभत्सेत्यादि। वीराद्बीभत्से ततोऽपि रौद्रे चित्तदीप्तेः कार्यायाः सातिशयतया कारणमोजः क्रमेणोत्कर्षवत्। तदेतत् वीररौद्रयोर्निःप्रतिपक्षम्। बीभत्से तु माधुर्यबलानुविद्धमिति विशेषः। प्राधान्येन माधुर्यौजसोरेकैकविधानमत्र प्रक्रान्तम्। अतो हास्याद्भुतभयानकेषु न किंचिद्विहितम्। तेषूभयगुणप्राधान्यात्।

प्रसादलक्षणमाह—

शुष्केन्धनाग्निवत्स्वच्छजलवत् सहसैव यः।
व्याप्नोत्यन्यत्प्रसादोऽसौ सर्वत्र विहितस्थितिः ॥ १२२ ॥
[का०प्र० VIII. 70]

ओजसि शुष्केन्धनाग्निवत् माधुर्ये स्वच्छशर्कराजलवत् यो गुणोऽन्यत् व्याप्यं चित्तं झटि[29a]त्येव रसेन व्याप्नोति स प्रसादः। अयं सर्वेषु रसेषु आधेयतया सर्वासु रचनासु व्यङ्ग्यतया स्थितः। एतदाह—सर्वत्र विहितस्थितिरिति। कथं तर्हि तत्त्ववेदिनामपि शब्दार्थयोर्मधुरादिव्यवहार इति चेत्—

गुणवृत्त्या पुनस्तेषां वृत्तिः शब्दार्थयोर्मता ॥ १२३ ॥
[का०प्र० VIII. 71]

गुणवृत्तिरुपचारः। आकारे शौर्यस्येव व्यञ्जके सुकुमारवर्णादौ तदुपचार इत्यर्थः। तेषां गुणानां के कस्य व्यञ्जका इत्याकांक्षायामाह—

मूर्ध्नि वर्गान्त्यगाः स्पर्शा अटवर्गा रणौ लघू।
अवृत्तिर्मध्यवृत्तिर्वा माधुर्ये घटना तथा ॥ १२४ ॥
[का० प्र० VIII. 74]

माधुर्ये व्यङ्ग्ये टवर्गवर्जिताः कादयो मावसानाः रेफणकारौ चेति वर्णाः। तत्र कादयो मूर्ध्नि स्वस्ववर्गान्त्यवर्णगताः—

पद्मपुञ्जभ्रमद्भृङ्गां गङ्गां किं गन्तुमीहसे।

इत्यादौ। रेफणकारौ तु ह्रस्वस्वरान्तरितौ वृत्तिः समासस्तस्य चाभावो मध्यमता वा। घटना तथेति। सौकुमार्यवती घटना। सुकुमारपदानां तादृशपदान्तरयोगरचनेत्यर्थः। वर्णसौकुमार्यवती रचना वर्णसौकुमार्यादेव लब्धेति। पदान्तरयोगे सौकुमार्यलाभाय घटना तथेत्युक्तमिति॥

उदाहरणम्—

अनङ्गरङ्गप्रतिमं तदङ्गं भङ्गीभिरङ्गीकृतमानताङ्ग्याः।
कुर्वन्ति यूनां सहसाः यथैताः स्वान्तानि शान्तापरचिन्तनानि॥
[Quoted in का॰प्र॰ VIII. 347]

योग आद्यतृतीयाभ्यामन्त्ययो रेण तुल्ययोः।
टादिः शषौ वृत्तिदैर्घ्यं गुम्फ उद्धत ओजसि॥ १२५॥
[का॰प्र॰ VIII.75]

ओजसि व्यङ्ग्ये वर्गप्रथमतृतीयाभ्यां सह द्वन्त्ययोर्द्वितीयचतुर्थयो-र्योगो यथा कच्छपुच्छेत्यादि। तथा रेफेणाध उप[29b]रि उभयत्र वा यस्य कस्यापि योगः। उदाहरणम् वक्त्रार्कनिर्ह्रादादयः। तथा तुल्ययोः कयोश्चि-द्योगो यथा चित्तवित्तेत्यादौ। तथा टादिचतुष्टयं शषौ चेति वर्णाः। समा-सस्तु दीर्घः। गुम्फो रचना। सा चोद्धता विकटेति॥

उदाहरणम्—

मूर्ध्नामुद्वृत्तकृत्ताविरलगलगलद्रक्तसंसक्तधारा-
धौतेशाङ्घ्रिप्रसादोपनतजयजगज्जातमिथ्यामहिम्नाम्।
कैलासोल्लासनेच्छाव्यतिकरपिशुनोत्सर्पिदर्पोद्धुराणां
दोष्णां चैषां किमेतत् फलमिह नगरीरक्षणे यत्प्रयासः॥
[हनूमन्नाटक VIII; quoted in का॰प्र॰ VII. 159]

यथा वा मम—

यस्मिन्मन्युभरेण धुन्वति धनुर्गाढाञ्जनश्यामल-
प्रच्योतज्जलबिन्दुधौतविगलत्पाटीरपङ्काकुलः।
भ्रश्यत्कूपणवज्रकण्टकघनीभावं भजत्यन्तरा
श्वासाभिद्रुतपूर्वदेवसुदृशां पन्थाः पुरा दुस्तरः॥
[ ]

प्रसादलक्षणमाह—

श्रुतिमात्रेण शब्दात्तु येनार्थप्रत्ययो भवेत्।
साधारणः समग्राणां स प्रसादो गुणो मतः ॥१२६॥
[ का० प्र० VIII. 76 ]

येन शब्देन समासेन वा यया रचनया वा श्रुतिमात्रेण शब्दादर्थप्रत्ययः स प्रसादव्यञ्जक इत्यर्थः ॥

उदाहरणम्—

परिम्लानं पीनस्तनजघनसंगादुभयत-
स्तनोर्मध्यस्यान्तः परिमिलनमप्राप्य हरितम्।
इदं व्यस्तन्यासं श्लथभुजलताक्षेपवलनैः
कृशाङ्ग्याः संतापं वदति बिसिनीपत्रशयनम् ॥
[ रत्ना० II. 12; quoted in का० प्र० VIII. 349 ]

अत्र मधुरो व्याप्यः, प्रसादो व्यापकः ॥

यथा वा मम—

कर्णः स्वर्णं दरिद्रो वितरतु विरतिं यातु दुःशासनोऽपि
क्रौर्यं दुर्योधनस्याप्यनवरतमदभ्मातमस्तं प्रयातु।
द्रोणः शोणः किमेवं रणभुवि पुरतः स्थास्यति प्रायशो मे
भीष्मःशौर्यातिभीष्मः [30a]प्रधिगतिविभवाद्विष्णुरेषोऽस्मि जिष्णुः ॥
[ ? ]

अत्र ओजो व्याप्यं, प्रसादो व्यापकः ॥

यथा वा मम—

दर्पेण स्वेन सौरैरपि करनिकरैः काद्रवेयस्थलीन-
दपपातोद्गीर्णहालाहलबहलतरैरन्तरुष्मायमाणाः।
व्यार्तैर्वक्त्रैरुरोभिर्घनघनजघनैः फेनजालं क्षरन्ते
मध्ये व्योम्नः कथंचिद्विदधति विरतिं सप्तयः सप्तसप्तेः ॥
[ ? ]

नीरसेऽत्र माधुर्यौजसोरभावेऽपि प्रसादः। स चोपचाराद्वर्णनिष्ठ एव। वस्तुतस्तु नात्र प्रसादोऽपि, तस्य रसैकधर्मत्वात् ॥

यथा वा मम--

अलंकारज्ञानं निखिलनटशास्त्रे परिचयः
सदा न्याये दृष्टिः परपुरुषसेवा नवरसैः ।
रतिर्धर्मप्राया निजविभवपोष्यं गुरुकुलं
मम स्पर्धा दामोदरमृगदृशा नान्यपुरुषैः ॥
[ १ ]

पण्डितमुद्दिश्य एतेन मम सहैव स्पर्धेति वदन्तं सदैव स्पर्धमानमल्पविद्यं प्रति न त्वयाऽसमानशीलेनास्माकं स्पर्धा, अपि तु समानशीलया दामोदरधर्मपत्न्या लक्ष्म्येत्यभिप्रायकोऽयं श्लोकः । मम हि अलंकारशास्त्रे ज्ञानं, नाटकेषु परिचयः, सर्वदा न्यायशास्त्रे दृष्टिः । शृङ्गारादिनवरसैः परा उत्कृष्टा ये पुरुषा राजानस्तेषां सेवा, धर्मप्राया बुद्धिः, स्वार्जनपोष्यं गुरूणां पितृचरणानां कुलं कुटुम्बम् । लक्ष्म्यामप्यागतायामाभरणपरिधाने ज्ञानं, नृत्यादौ कुशलता, सर्वदा न्यायस्य व्यवहारमूलत्वात् न्याये ज्ञानम् । परपुरुषो विष्णुस्तस्य सेवा । धर्मस्य प्रायशो द्रव्यमूलकत्वात् बुद्धिर्धर्मप्राया लक्ष्मीपात्रेण हि स्वकुटुम्बपोषणं क्रियते इति तयैव सहास्माकं[30b]स्पर्धा न त्वया वैधर्म्यशालिनेति । असूयापोषितो गर्वोऽत्र व्यङ्ग्यः । प्रसादश्च गुणः । श्रुतिमात्रेण शब्दादर्थद्वयस्य युगपत्प्रत्ययात् । तृतीयोऽप्यर्थस्तथैव प्रतीयत इति चेन्न । स तात्पर्यविषयः प्रसादनिघटको वेति ।

अन्येषां तु वर्णानां स्पर्शटवर्गादिभिन्नानामुदासीनत्वमिति तदुपादाने पुराणच्छायेत्युच्यते । नन्वेवं माधुर्यादावुद्धतरचनादयः सर्वत्र विरुद्धाः स्युरिति चेन्न । यद्यपि गुणपरतन्त्रा रचनादयस्तथापि—

वक्तृवाच्यप्रबन्धानामौचित्येन कचित् कचित् ।
रचनावृत्तिवर्णानामन्यथात्वमपीष्यते ॥ १२७ ॥

अन्यथात्वं गुणपारतन्त्र्याभावः । वक्तृवाच्यप्रबन्धौचित्यविरहे एव गुणपारतन्त्र्यस्वीकारात् । तादृशस्थलेषु वक्तुः क्रोधावेगसौकुमार्यनिर्वेदादिव्यक्तौ उपयोगात् । तत्र क्वचिद्वाच्यप्रबन्धानपेक्षया वक्त्रौचित्यादेव रचनादयः । यथा--

मन्थायस्तार्णवाम्भःप्लुतकुहरचलन्मन्दरध्वानधीरः
कोणाघातेषु गर्जत्प्रलयघनघटान्योन्यसंघट्टचण्डः ।

कृष्णाक्रोधाग्रदूतः कुरुकुलनिधनोत्पातनिर्घातवातः
केनास्मत्सिंहनादप्रतिरसितसखो दुन्दुभिस्ताडितोऽयम् ॥
[वेणी॰ I. 22]

अत्र न क्रोधादिभिर्दीप्तरसो व्यङ्ग्य, प्रश्नरूपत्वाद्वाक्यस्य। प्रबन्धश्च नाटकात्मा अभिनेय इति दीर्घसमासस्त्व प्रतिकूल यद्यपि, तथापि वक्ता भीमसेन इति तदौचित्यादुद्धता रचनात्र। अतस्तदुद्धतत्वादिव्यक्तौ एवोपयुज्यते ॥

क्वचित्तु वक्तृप्रबन्धौचि यानपेक्षया वाच्यौचित्यादेव रचनादय। यथा—
प्रौढच्छेदानुरूपोच्छलनरयभवत्सैंहिकेयोपघात-
त्रासाकु[31a]ष्टाश्व तिर्यग्वलितरविरथेनारुणेनेक्ष्यमाणम्।
कुर्वत्काकुत्स्थवीर्यस्तुतिमिव मरुता कंधरारन्ध्रभाजा
झाङ्कारैर्भीममेतन्निपतति वियत कौम्भकर्णोत्तमाङ्गम् ॥
[Quoted in का॰ प्र॰ VIII 351]

अत्र वक्ता वेतालिक। प्रबन्धश्चाभिनेयात्मेति दीर्घसमासानौचित्येऽपि वाच्यस्य कुम्भकर्णस्यौद्धत्यादुद्धता रचनादय ॥

क्वचिद्वक्तृवाच्यानपेक्षया प्रबन्धोचिता एव रचनादय। तथा हि— आख्यायिकाया हि शृङ्गारेऽपि व्यङ्ग्येऽनुद्धतेऽपि वक्तरि नातिमसृणा वर्णादय प्रत्युत विकटबन्धत्वेन छायावत्त्वात्। विप्रलम्भकरुणयोस्तु तस्यामपि दीर्घसमासपरिहार। तयोरतिसौकुमार्यात्। कथाया तु रौद्रेऽपि नात्यन्तमुद्भटा वर्णादय। वर्णनीयमहापुरुषसुखप्रतिपत्तिसमर्पणस्योद्देश्यत्वात्। नाटकाद्यभिनेये तु रौद्रेऽपि न दीर्घसमासादय। विच्छेदेनाभिनयसौकर्यात् एव मुक्तकाद्यौचित्यमनुसरणीयम्। तथा हि—एकैकच्छन्दसि वाच्यसमाप्तिर्मुक्तकम्। द्वयो सदानितकम्। त्रिषु विशेषकम्। चतुर्षु कालापकम्। पञ्चादिचतुर्दशान्तेषु कुलकम्। तत्र मुक्तकेषु कवे रसत्वाभिनिवेशे रसाश्रयमौचित्यम्। नीरसवस्तुवर्णनाभिनिवेशे तु तथैवौचित्यम् ॥

तत्राद्य यथा—
प्रागप्राप्तनिशुम्भशाम्भवधनुर्द्वैधाक्रियाविर्भव-
त्क्रोधप्रेरितभीमभार्गवभुजस्तम्भापविद्धः क्षणात्।

---

1 The illustration is not found in का॰ प्रदीप

सज्वालः परशुर्भवत्वशिथिलस्त्वत्कण्ठपीठातिथि-
येनानेन जगत्सु खण्डपरशुर्दे[31b]वो हरः ख्याप्यते[1] ॥
[ महावीरचरित II. 33 ]

अत्र पादत्रये रसोचिता रचनादयः क्रोधव्यञ्जकाः । यत्र तु गुरुस्मरणेन क्रोधव्यपगमस्तत्र मसृणा एव वर्णा इत्युचितो बन्धः ॥

द्वितीयो यथा मम—

दिशः शून्याकाराश्चपलमृगतृष्णामयजलाः
समस्तोऽप्यस्तोऽयं जननयनकोशस्य विभवः ।
पयः क्वाथीभावं व्रजति सरसि स्वल्पसलिले
प्रचण्डो मार्तण्डस्तपति जगतामेव शिरसि ॥
[ ? ]

अत्र मध्याह्नरूपरूक्षवर्णने रूक्ष एव बन्धः । रसनिवेशाभावे कामचार इत्यपि केचित् । संदानितकादिषु काव्यसमाप्तेर्वैकट्यं दीर्घमध्यसमासता[2] च । प्रबन्धगतेषु पुनस्तेषु प्रबन्धोचिता एव रचनादय इत्यादि स्वयं विभावनीयं स्वयंभावितबुद्धिभिरित्यलं बहुभाषणेन[3] ॥

इति श्रीमच्छुक्लभूदेवविरचिते रसविलासे गुणनिरूपणो नाम
चतुर्थः स्तबकः ॥

---

१ II हरो व्याप्यते. २ B दीर्घसमासता. ३ B °विभावितबुद्धिभिः.

पञ्चमः स्तबकः।

अथावसरसंगत्या रसविरोधित्वेन हेयतया स्मृतत्वेन प्रसङ्गाच्च रसदोषा निरूप्यन्ते। तानाहुः काव्यप्रकाशकृतः—

व्यभिचारिरसस्थायिभावानां शब्दवाच्यता।
कष्टकल्पनया व्यक्तिरनुभावविभावयोः ॥ १२८ ॥
प्रतिकूलविभावादिग्रहो दीप्तिः पुनः पुनः।
अकाण्डे प्रथनच्छेदावङ्गस्याप्यतिविस्तृतिः ॥१२९॥
अङ्गिनोऽननुसंधानं प्रकृतीनां विपर्ययः।
अनङ्गस्याभि[32a]धानं च रसे दोषाः स्युरीदृशाः ॥१३०॥
[ का० प्र० VII. 60-62 ]

१. शब्दवाच्यता सामान्यतो विशेषतो वा स्वशब्देनोपादानम्। सा व्यभिचारिणां यथा—

सव्रीडा दयितानने सकरुणा मातङ्गचर्माम्बरे
सत्रासा भुजगे सविस्मयरसा चन्द्रेऽमृतस्यन्दिनि।
सेर्ष्या जह्नुसुतावलोकनविधौ दीना कपालोदरे
पार्वत्या नवसंगमप्रणयिनी दृष्टिः शिवायास्तु वः ॥
[ Quoted in का० प्र० VII. 321 ]

अत्र व्रीडादयो व्यभिचारिभावाः स्वशब्देनोपात्ताः। न च स्वशब्दे-नोपात्तेषु व्यभिचार्यादिषु आस्वादसंभवोऽनुभूयते किं[1] अनुभावादिमुखेनैव व्यक्तेषु। तस्मादास्वादानुत्पत्तिर्दूषकताबीजमिति प्राञ्चः ॥

[2]अन्यास्तु—अत्र यदि असाधारणानां विभावानुभावानामुपस्थिति-स्तदा व्यभिचारिभावानामाक्षेपादेव रसव्यक्तिरिति नास्वादविघातः। यदि तेषां नोपस्थितिस्तदा कारणाभावादेव नास्वादः। एवं च व्यभिचारिभावानां

1 A B have the following marg. note on अवसरः-प्रतिबन्ध-कीभूतशिष्यजिज्ञासानिवृत्तौ अवश्यवक्तव्यमवसरः. 2 The discussion, more or less in identical terms, is found in का० प्रदीप VII. 3 Cf. र० गं० P. 50.

स्वशब्दोपादाने को दोष इत्याशङ्क्य विभावानुभावानामुपस्थितौ व्यभिचारिणां चाक्षेपावश्यकत्वे स्वशब्देनोपादानस्य वैयर्थ्याद् व्यर्थत्वं दोषमाहुः। केचित्तु रसभावादीनां व्यञ्जनावृत्त्यैकगम्यत्वे व्यवस्थिते शब्दवाच्यत्वे वमनाख्यं दोषमाहुः ॥ ए[32b]वं च स्थिते-

व्यानम्रा दयिताननै मुकुलिता मातङ्गचर्माम्बरे
सोत्कम्पा भुजगे निमेषरहिता चन्द्रामृतस्यन्दिनि।
मीलद्भ्रूः सुरसिन्धुदर्शनविधौ म्लाना कपालोदरे
[ Quoted in का० प्र० VII. ]

इति पादत्रये पाठो युक्तः। एवं भावादिशब्देनोपादानेऽपि द्रष्टव्यम्॥

रसस्य सामान्यतो रसशब्देनोपादानं यथा—

तामनङ्गजयमङ्गलश्रियं किंचिदुच्चभुजमूललोकिताम्।
नेत्रयोः कृतवतोऽस्य गोचरे कोऽप्यजायत रसो निरन्तरः॥
[ Quoted in का०प्र० VII. 322 ]

अत्र विभावानुभावव्यभिचारिभावैः शृङ्गाराख्यक्तौ जायमानायां व्यर्थं रसपदं कवेरव्युत्पत्त्युन्नायकत्वेन सहृदयहृदयवैमुख्यमापादयतीति दूषकताबीजम्। एवमग्रेऽपि ॥ विशेषतः शृङ्गारपदेनोपादाने यथा—

आलोक्य कोमलकपोलतलाभिषिक्त
व्यक्तानुरागसुभगामभिराममूर्तिम्।
पश्यैष बाल्यमतिवृत्य विवर्तमानः
शृङ्गारसीमनि तरङ्गितमातनोति ॥
[ Quoted in का० प्र० VII. 323 ]

स्थायिनो विशेषत उत्साहपदेनोपादाने यथा—

संप्रहारे प्रहरणैः प्रहाराणां परस्परम्।
ठणत्कारैः श्रुतिगतैरुत्साहस्तस्य कोऽप्यभूत् ॥
[ Quoted in का०प्र० VII. 324 ]

अत्रैव 'स्थायिभावोऽस्य कोऽप्यभूत्' इति चतुर्थपादपाठे सामान्यतः शब्दवाच्यतोदाहरणं द्रष्टव्यम्।

---

१ Cf र० गं० P. 50 : व्यङ्ग्यस्य वाच्यीकरणे सामान्यतो वमनाख्यदोषस्य वक्ष्यमाणत्वात्. २ Cf का० प्रदीप VII. ३ Cf का०प्रदीप VII.

२. कष्टकल्पनया पृथक् श्लोकाद्यनुसंधानेन प्रकरणा[33a]दिपर्यालोचनेन वा विलम्बेन व्यक्तिः ॥ तत्रानुभावस्य यथा—

कर्पूरधूलिधवलद्युतिपूरधौत-
दिङ्मण्डले शिशिररोचिषि तस्य यूनः ।
लीलाशिरोंऽशुकनिवेशविशेषक्लृप्ति-
व्यक्तस्तनोन्नतिरभून्नयनावनौ सा ॥
[ Quoted in का॰प्र॰ VII. 325 ]

यथा वा—

दैवादहमद्य तया चपलायतनेत्रया वियुक्तश्च ।
अविरलविलोलजलदः कालः समुपागतश्चायम् ॥
[ Cf विक्रमो॰ IV. 3]

इत्यादौ[1] यथा विश्लेषमेघागमनयोः समानकालत्वप्रतिपादने नानुभावाद्याक्षेपस्तथा नात्रेति (पूर्वपक्ष इति)। अत्र[2] चन्द्रादय उद्दीपनालम्बनविभावाः शृङ्गारयोग्या अनुभावप्रतीत्या आस्वादापर्यवसायिनः स्थिताः । यद्यप्यंशुकनिवेशो विभावत्वयोग्यः तथापि तस्य स्तनव्यक्तिप्रयोजकत्वेन उपादानादनुभावत्वपर्यवसानमिति प्राञ्चः । नव्यास्तु पुंनिष्ठ एव शृङ्गारोऽत्र प्रतिपिपादयिषितः । 'अभून्नयनावनौ सा' इत्यनेन तस्या एव आलम्बनत्वप्रतिपादनात् । न च पुंसि कश्चिदनुभाव उपात्तः । न च विभावैरप्याक्षेपार्हः । दर्शनस्य वीतरागादिसाधारणत्वात् इति कष्टेन कल्पनीयः ॥

विभावस्य यथा—

परि[3]हरति म[4]तिं रतिं लुनीते
स्खे[5]लतितरां परिवर्तते च भूयः ।
इति बत विषमा दशाऽस्य देहं
परिभवति प्रसभं किमत्र कुर्मः ॥
[Quoted in का॰ प्र॰ VII. 326 ]

अत्र[6] कामिनीरूपशृङ्गारविभावोऽभिमतो न पुनरुपात्तः । न च मतिपरिहारादिभिरनुभावैराक्षेप्तुमपि शक्यते । तेषां करुणादावपि[33b]. संभवात् इति कष्टेन कल्पनीयः ॥

---

१ Cf का॰ प्रदीप VII. २ B om. च. ३ B परिहसति. ४ रतिं मतिं by transp. in का॰प्र॰. ५ स्खलति मुहुः in का॰प्र॰. ६ Cf का॰ प्रदीप VII.

३. प्रतिकूलविभावादिग्रहः प्रकृतरसादेः प्रतिकूलो यो रसादिस्तद्विभावानुभावव्यभिचारिणां ग्रहः ॥

तत्र तादृशविभावव्यभिचारिणोर्यथा—

प्रसादे वर्तस्व प्रकटय मुदं संत्यज रुषं
 प्रिये शुष्यन्त्यङ्गान्यमृतमिव ते सिञ्चतु वचः ।
निधानं सौख्यानां क्षणमभिमुखं स्थापय मुखं
 न मुग्धे प्रत्येतुं प्रभवति गतः कालहरिणः ॥

[शार्ङ्गधरपद्धति, quoted in का० प्र० VII. 327]

अत्र प्रकृते शृङ्गारप्रतिकूलस्य शान्तस्य प्रकाश्यमानकालानित्यतारूपो विभावः । एतत्प्रकाशितो निर्वेदरूपो व्यभिचारी स्फुटमेव गृह्यते ॥

तादृशानुभावे ग्रहो यथा—

दृष्ट्वा कान्तं कापि कन्दर्पकान्तं
 संतिष्ठन्तं मध्यभागे गुरूणाम् ।
अत्यैकान्तं काननं गन्तुमैच्छत्
 त्यक्त्वा सर्वं कार्यभारं गृहस्य ॥[1]

[Cf का० प्र० VII. 328]

अत्र व्याजादिकं विना वनगमनं सकलपरिहारश्च शान्तानुभावः । न च व्याजः प्रतिपादित इति शृङ्गारस्य प्रकृतस्य विच्छेदः । इन्धनानयनव्याजेन संभोगार्थे वनगमनं यद्युच्यते तदा न शान्तानुभावग्रहः ॥

४. पुनः पुनर्दीप्तिरङ्गरसादिविषयो दोषः । अङ्गिनस्तु स महाभारतादौ शान्तादेरिव न वैरस्यमावहति ॥ यथा—

अथ मोहपरायणा सती विवशा कामवधूर्विबोधिता ।

इत्यादिना दीप्तिमानीतोऽपि करुणः

अथ सा पुनरेव विह्वला वसुधालिङ्गनधूसरस्तनी ॥

[कुमार० III.]

इत्यादिना पुनर्दीप्तिं नीतः । उपभुक्तो हि पुनर्भुज्यमानः परिम्लानस्तबकवद्वैरस्याय कल्पते ॥

[1] The whole discussion is taken from काव्यप्रदीप. २ का० प्र० reads instead:–

निभृतरमणे लोचनपथे पतिते गुरुजनमध्ये ।
सकलपरिहारहृदया वनगमनमेवेच्छति वधूः ॥

केचित्तु—प्रबन्धे प्रकृतस्य रसस्य प्रसङ्गान्तरेण विच्छिन्नस्य पुनर्दीपने न सामाजिकानां साकल्येन रसास्वाद इति विच्छि[34a]न्नदीपनं दोषमाहुः ॥

५. अकाण्डे अनवसरे प्रथनं यथा वेणीसंवरणे द्वितीयेऽङ्केऽनेकवीरक्षये प्रवृत्ते भानुमत्या सह दुर्योधनस्य शृङ्गारवर्णनम्। अयं च तत्तद्रसप्रस्तावानर्हे तत्तद्रसप्रस्तावः वेदाध्ययनसंध्यावन्दनदेवयजनादिधर्मवर्णने प्रसक्ते कयापि कामिन्या सह कस्यचित् कामुकस्यानुरागवर्णनमिव वैरस्याय कल्पते॥

६. अकाण्डे विच्छेदानर्हे विच्छेदो यथा वीरचरिते राघवभार्गवयोः रविच्छिन्नप्रसरतया प्रवृत्ते वीररसे 'कङ्कणमोक्षाय यामी'ति राघवस्योक्तौ। अप्रस्तावे तथा वचनं व्याजेन निर्गमं प्रतिपादयत् वीररसाभावे पर्यवस्यति। यथा वा समुपस्थितेषु महाहवदुर्मदेषु प्रतिभटेषु मर्माभिन्दीति वचनात्युद्रिक्तेषु नायकस्य सन्ध्याहोमादिवर्णनायाम् ॥

७. अङ्गस्यातिविस्तृतिः—अप्रधानस्य प्रतिनायकादेः नानाविधानां चरितानां नानाविधानां च संपदां नायकसंबन्धिचरितादिभ्य आधिक्येन वर्णनम्। यथा हयग्रीववधे हयग्रीवस्य। एवं वर्णने नायकस्योत्कर्षो न सिध्येत्। तत्प्रयुक्तो रसपोषश्च न स्यात्। न च प्रतिनायकोत्कर्षस्य तदभिभावकनायकोत्कर्षाङ्गत्वात्कथमवर्णनीयत्वमिति वाच्यम्। तादृशस्य प्रतिनायकोत्कर्षवर्णनस्य तदभिभावकनायकोत्कर्षाङ्गत्वासंपादकत्वं तादृशस्येष्टत्वात्। तद्विरोधिन एव निषेध्यत्वात्। न च प्रतिपक्षस्य वर्ण्यमानोऽप्युत्कर्षः स्वाश्रयहन्तृतामात्रादेव प्रकृतगतमुत्कर्षमतिशाययेत् अतो न दोषावह इति वाच्यम्। एवं हि सति महाराजं कमपि विषविषमविशिखविशे[34b]षक्षेपमात्रेण व्यापादितवतो बराकशबरस्येव प्रकृतस्य नायकस्य न कोऽप्युत्कर्षः स्यादिति ॥ तथा चातिशयितं प्रतिनायकवर्णनं प्रधानविरोधानजनकतया दोषावहमिति ॥

८. अङ्गिनो रत्याश्रयस्य रसालम्बनस्य च अननुसंधानमन्तरान्तरा विस्मृतिः। तदनुसंधानाधीना हि रसधारा तदनुसंधानमन्तरा विरता स्यात् ॥

९. प्रकृतीनां विपर्ययः—यत्प्रकृतौ यद्वर्णनमुचितं तद्विपर्यासेन वर्णनम्। प्रकृतयस्तावद्दिव्या अदिव्या दिव्यादिव्याश्च। अत्र दिव्यत्वममर्त्यैकरूपत्वम्।

१ Cf र० गं० P. 50. २ E वर्णनीयम्. ३ Cf र० गं० P. 50. ४ Cf र० गं० P. 50-51.

अतो न पातालीयाद्यसंग्रहः। उदाहरणं श्रीमन्महेश्वरादिः। अदिव्यत्वं मर्त्यैकरूपत्वम्। यथा माधवादेः। दिव्यादिव्यत्वमुभयरूपता यथा कृष्णादेः। त्रिविधा अप्येते चतुर्धा भवन्ति। धीरोदात्तधीरोद्धतधीरललितधीरशान्तभेदात्। क्रमेण वीररौद्रशृङ्गारशान्तरसप्रधानत्वमेषां लक्षणानि। श्रीरामजामदग्न्यवासुदेवबुद्धाः उदाहरणानि। एतेषु भेदेषु प्रत्येकमुत्तममध्याधमभेदत्वम्। अनुकूलादिभेदास्त्वस्थिराः। अनुकूलादिर्हि कदाचिद्दक्षिणः संपद्यते इति प्रकृतिभेदा न गणनीयाः। एवं भिन्नासु प्रकृतिषु रतिहासशोकाद्भुतानि अदिव्योत्तमप्रकृतिवद् दिव्येष्वपि वर्णनीयानि। किं तु रतिः संभोगशृङ्गाररूपा उत्तमदिव्यविषया स्फुटीकृतसकलानुभावेन वर्णनीया॥

क्रोधं प्रभो संहर संहरेति यावद्गिरः खे मरुतां चरन्ति।
तावत्स वह्नि[35a]र्भवनेत्रजन्मा भस्मावशेषं मदनं चकार॥

[कुमार॰ IV. 72, quoted in का॰ प्र॰ VII. 329]

इत्यादि भ्रुकुट्यादिवर्जितः सद्यःफलदः क्रोधो नाकपातालाद्युल्लङ्घनसमुद्रोल्लङ्घनदिनरात्रिविपर्यासाद्युत्साहाद्याश्चर्यकारिवस्तुवर्णनं दिव्येष्वेव विधेयं नादिव्येषु। प्रथमे आलम्बनगताराध्यत्वस्य द्वितीयेऽनुभावगतमिथ्यात्वस्य च प्रतीत्या रसानुल्लासापत्तेः। न च प्रथमे साधारणीकरणादाराध्यत्वज्ञानानुत्पत्तिरिति वाच्यम्। यत्र सहृदयानां रसोद्बोधः प्रामाणिकस्तत्रैव साधारणीकरणस्य कल्पनात्। अन्यथा स्वमातृविषयकस्वपितृरतिवर्णनेऽपि सहृदयरसोद्बोधापत्तेः। जयदेवप्रभृतिभिस्तु गीतगोविन्दादिप्रबन्धेषु सकलसहृदयसंमतोऽयं समयो मदोन्मत्तमतङ्गजैरिव भिन्न इति न तन्निदर्शनेन इदानींतनेन तथा वर्णयितुमुचितम्। अदिव्येषु च यावत् महत् कर्म लोकप्रसिद्धमुचितं वा तावदेवोपनिबन्धनीयम्। अधिकं हि निबध्यमानमसत्यप्रतिभासतया रामादिवद्वर्तितव्यं न रावणादिवदित्याद्युपदेशे न पर्यवस्येत्। दिव्यादिव्येषु पुनरुभयोरप्युचितं वर्णनीयम्। एवमुक्तस्यौचित्यस्य दिव्यादीनामिव उत्तमादीनामप्यन्यथा वर्णने प्रकृतिविपर्ययः। आमन्त्रणौचित्यलंघनेऽप्येवम्। तथा हि—विद्यावयोवर्णाश्रमतपोभिरुत्कृष्टैः

१ Cf र॰ गं॰ P. 25. २ Bom. हि. ३ Cf र॰ गं॰ P. 52.

स्वतोऽपकृष्टेषु न सबहुमानेन वचसा व्यवहर्तव्यम् । [35b]व्यवहर्तव्यं चापकृष्टैरुत्कृष्टेषु । तत्रापि भवन् भगवन् इत्यादिभिः संबोधनैर्मुनिगुरुदेवताप्रभृतय एव न राजादयः। जात्योत्तमैर्द्विजैरेव नाधमैः शूद्रादिभिः । परमेश्वरेत्यादिसंबोधनैश्चक्रवर्तिन एव न मुनिप्रभृतयः संबोध्याः । एवं यत्र जातिदेशकालवर्णाश्रमवयोऽवस्थाप्रकृतिव्यवहारादिषु यल्लोकशास्त्रसिद्धमुचितं द्रव्यगुणक्रियादि तद्भेदो वर्ण्यमानः प्रकृतिभेदे पर्यवस्यति ॥

तथथा—

पराक्रमो गवादीनां सिंहादीनां च साधुता।
स्वर्गादौ व्याधिजरसौ भूलोकेऽमृतसेवनम् ॥१३१॥
शिशिरादौ जलक्रीडा ग्रीष्मादावग्निसेवनम् ।
प्रतिग्रहः क्षत्रियाणां मृगया मुखजन्मनाम् ॥१३२॥
शूद्रस्य वेदाध्ययनं ताम्बूलं ब्रह्मचारिणाम् ।
यतीनां वनितासंगो द्रव्यस्योपार्जनं तथा ॥१३३॥
बालस्थविरयोः स्त्रीणां सेवा विषयचापलम् ।
तरुणानां च वैराग्यं कुमाराणामलज्जता ॥१३४॥
आढ्याचारो दरिद्राणां धनिकानां दरिद्रता ।
इत्यादिकं वर्ण्यमानं वैरस्यायैव कल्पते ॥१३५॥
[ ]

तेषामनौचित्यं पानकरसे सिकतापातवद्रसे चर्व्यमाणेऽरुंतुदम् । तदाहुः—

अनौचित्यादृते नान्यद्रसभङ्गस्य कारणम् ।
प्रसिद्धौचित्यबन्धस्तु रसस्योपनिषत् परा ॥१२६ ॥ इति ।
[ ध्वन्या॰ III. P. 145; quoted in रसतरङ्गिणी॰ VIII ]

१०. अनङ्गस्याभिधानम्-प्रकृतरसानुपकारकस्य वर्णनम् । तदपि प्रकृतरसविरामहेतुत्वाद्दोष एव । [36a]यथा कर्पूरमञ्जर्यां नायिकया स्वात्मना च कृतं यद्वसन्तवर्णनं तदनादृत्य बन्दिवर्णनस्य राज्ञा प्रशंसनम् । ईदृशा

१ Cf र॰ गं॰ P. 52. २ Cf र॰गं॰ P. 51. ३ B has marg. note on उपनिषद्:—उपनिषदिति अत्र सोपनिषद् आश्रयः. ४ Cf र॰ गं॰ P. 51.

इत्यनेनैतदुक्तं भवति यदेवंविधा अन्येऽप्यनौचित्यहेतवो भवन्ति। यथा नायिकापादप्रहारादिना नायककोपादिवर्णनमित्याद्यनौचित्यं रसभङ्गहेतु इत्यास्तां विस्तरः॥

इति श्रीमच्छुक्लभूदेवविरचिते रसविलासे रसदोषनिरूपणो नाम

पञ्चमः स्तवकः॥

अथ क्वचिद्दोषोद्धारः । यथा —

न दोषः स्वपदेनोक्तावपि संचारिणः क्वचित् ॥ १३७ ॥

[ का० प्र० VII]

संचारिणो न तु रसस्थायिनोरपि । क्वचिदिति यत्रेतरविलक्षणो नानुभावः ॥ यथा —

औत्सुक्येन कृतत्वरा सहभुवा व्यावर्त्यमाना ह्रिया
तैस्तैर्बन्धुवधूजनस्य वचनैर्नीताभिमुख्यं पुनः ।
दृष्ट्वाग्रे वरमात्तसाध्वसरसा गौरी नवे संगमे
संरोहत्पुलका हरेण हसता श्लिष्टा शिवायास्तु वः ॥

[ रत्ना० I. 2]

अत्रौत्सुक्यशब्दवत् सहसाप्रसरणादिरूपोऽनुभावो नौत्सुक्यमसंदिग्धं प्रतिपादयितुमीष्टे भयादिसाधारणत्वात् । अत एव 'दूरादुत्सुकमागते विवलितम्' इत्यत्र व्रीडादीनि विवलितत्वादिभिरनुभावैरुपनिबध्नन् एव रसिकशिरोमणिरमरुकविरौत्सुक्यं स्वशब्देनोपात्तवान् ॥ अत्र नव्याः—त्वरादीनां भयादिसाधारण्येऽपि औत्सुक्यादिना स्वकारणेन विशिष्यमाणास्ता एवासाधारण्यमासाद्य औत्सुक्यादिकं व्यञ्जयन्तीति आस्वादोदयः । न तु शब्दादेव [36b]तत्प्रतिपत्त्या व्यभिचार्यादीनां वाच्यत्वासहनस्य व्युत्पादनात् । अत एवात्र न वैयर्थ्यमपि विशेषणत्वेनोपयोगात् । दूरादुत्सुकमित्यादौ तु शब्दमहिम्ना विशिष्टस्यैवानुभावस्य कल्पनमिति ततोऽभिव्यक्तिरिति । एवं च व्यवस्थिते शब्देनोपादानं विना न तदनुभावस्यासाधारण्यं, न च तेन विनाऽभिव्यक्तिः, न चाभिव्यक्तिं विनास्वादसंभव, न च तेन विना भावमध्यप्रवेशः, न च तमन्तरेण तया कीर्तनं युक्तमिति भावयोरुत्कीर्तनमप्येवादृशव्यभिचारिणि शब्दवाच्यताया दोषत्वाभावं साधयतीति युक्तमुत्पश्यामः ॥

1 The whole discussion is taken from र० गं० and काव्यप्रदीप VII.

संचार्यादेर्विरुद्धस्य बाध्यस्योक्तिर्गुणावहा ॥१२८॥
[का० प्र० VII. 63]

यदा प्रकृतरसविरुद्धव्यभिचार्यादिर्बाध्यत्वेनोच्यते तदा दूरे दोषत्वम्, प्रत्युत प्रकृतरसपरिपोषकतया गुणत्वम्। तत्र व्यभिचारिणो यथा—

क्काकार्यं शशलक्ष्मणः क्व च कुलं भूयोऽपि दृश्येत सा
दोषाणां प्रशमाय नः श्रुतमहो कोपेऽपि कान्तं मुखम्।
किं वक्ष्यन्त्यपकल्मषाः कृतधियः स्वप्नेऽपि सा दुर्लभा
चेतः स्वास्थ्यमुपेहि कः खलु युवा धन्योऽधरं धारयति ॥
[Quoted in का० प्र० IV 53 & VII. 331]

इत्यादौ। अत्र चतुर्षु पादेषु पूर्वभागप्रतिपाद्यानां शमाङ्गानां वितर्कमतिशङ्काधृतीनामुत्तरभागप्रतिपाद्याभिरभिलाषाङ्गभूताभिरौत्सुक्यस्मृतिदैन्यचिन्ताभिस्तिरस्कारपुरःसरं चिन्तायामेव पर्यवसानमिति भावशबलतापरिपोषकत्वात् गुणत्वम्।

विभावस्य यथा—

सत्यं मनोरमा रामाः सत्यं रम्या विभूतयः।
किं तु मत्ताङ्गनापाङ्गभङ्गलोलं हि जीवितम् ॥
[Quoted in का० प्र० VII 333]

अत्र पूर्वार्धे शृङ्गारस्यापरार्धे शान्तस्य विभावः। [37a] अनयोर्विरोधेऽपि पूर्वार्धस्य बाध्यत्वेनोक्तत्वान्न दोषः। प्रत्युत शान्तपरिपोषाद् गुणत्वम्। एवं ह्यत्र प्रतीयते–सर्वा रामादयः सत्येव जीविते तत्सौकर्यार्थमुपादेयाः। जीवितं चातिभङ्गुरमिति किंकृतमुपादेयत्वम्, अतो रम्यत्वेऽपि निष्फला एते इति ॥

एतेषां पूर्वोक्तानां रसानां परस्परं कैरपि सह विरोधः कैरपि सहाविरोधः। तत्र वीरशृङ्गारयोः, शृङ्गारहास्ययोः, वीराद्भुतयोः, वीररौद्रयो[1], शृङ्गाराद्भुतयोश्चाविरोधः। शृङ्गारबीभत्सयोः, शृङ्गारकरुणयोः, वीरभयानकयोः, शान्तरौद्रयोः, शान्तशृङ्गारयोश्च विरोधः। तत्र कविना प्रकृतरसपरिपोषकामेन तदभिव्यञ्जके काव्ये तद्विरुद्धरसाङ्गानां निबन्धनं

1 Cf र० गं० P 46.

न कार्यम्। तथा हि सति तदभिव्यक्तौ विरुद्धः प्रकृतं बाधेत। सुन्दोपसुन्द-न्यायेन सत्प्रतिपक्षन्यायेन वा उभयोर्ह्यानिर्निर्बलता वा स्यात्। यदि तु विरुद्धयोरप्येकस्य समावेश इष्यते तदा विरोधं परिहृत्य त्रिधेयः। तथा हि-विरोधस्तावद् द्विविधः—सामानाधिकरण्येन नैरन्तर्येण वा। स चोभयरूपः स्थलविशेषे नेति मनसिकृत्याह—

आश्रयैक्ये विरुद्धो यः स कार्यो भिन्नसंश्रयः।
रसान्तरेणान्तरितो नैरन्तर्ये तु यो रसः ॥१३९॥

[का० प्र० VII. 64]

यो रस इत्यत्र विरुद्ध इत्यनुपज्यते। [37b] तत्र रसानामाद्यो विरोध-स्तदधिकरणावृत्तिस्वरूपः, वीरभयानकयोरेकाधिकरण्ये। स च भयस्य भिन्नाधिकरणप्रतिपक्षगतत्वेन वर्णने निवर्तते, दोषत्वं[1] परिहृत्य वीररस-पोषकत्वेन गुणत्वे च पर्यवस्यति ॥

यथोदाहरणं मम—

यत्कटाक्षसरिरेव संगरे
शोणितं पिबति विद्विषां मुखात्।
रक्तिमानमुपयाति सा यदा
तत्क्षणं भवति पाण्डुरं हि तत् ॥

[ ]

अत्र नायके उत्साहस्य शत्रुषु भयस्य च वर्णनान्न विरोधः। रसपदे-नात्र प्रकरणे तदुपाधिः स्थायिभावो गृह्यते। रसस्य सामाजिकगतत्वेन नायकाद्यवृत्तित्वात्, अद्वितीयानन्दमयत्वेन विरोधासंभवाच्च। नैरन्तर्येण विरोधश्च तज्ज्ञानप्रतिबध्यज्ञानकत्वरूपः[2] स च रसान्तरस्याविरोधिनः संधिकर्तुरिवान्तरा स्थापने निवर्तते[3] ॥

यथा—

भूरेणुदिग्धान्नवपारिजात-
मालारजोवासितबाहुमध्याः।

---

१ B adds च after दोषत्व. २ Cf र० गं० P. 47. ३ Cf र० गं० P. 47.

गाढं शिवाभिः परिरभ्यमाणान्
सुराङ्गनाश्लिष्टभुजान्तरालाः ॥
सशोणितैः क्रव्यभुजां स्फुरद्भिः
पक्षैः खगानामुपवीज्यमानान् ।
संवीजिताश्चन्दनवारिसेकैः
सुगन्धिभिः कल्पलतादुकूलैः ॥
विमानपर्यङ्कतले निषण्णा
कुतूहलाविष्टतया तदानीम् ।
निर्दिश्यमानान् ललनाङ्गुलीभि-
र्वी[38a]राः स्वदेहान् पतितानपश्यन् ॥
[ध्वन्या॰ III, Quoted in का॰ प्र॰ VII, 334]

अत्र बीभत्ससामग्रीवशात् पूर्वं बीभत्सचर्वणा ततस्तत्सामर्थ्याक्षिप्तनिःशङ्कप्राणत्यागादिरूपसामग्रीवशाद्वीरचर्वणा । ततः शृङ्गारचर्वणेति न विरोधः । नैरन्तर्याभावात् । इत्थं चोदासीनचर्वणेन प्रतिबन्धकज्ञाननिवृत्तौ निष्प्रत्यूहः प्रतिबध्यचर्वणोदय इति फलितोऽर्थः ॥

अविरोधे प्रकारान्तरमपि । यथा—

स्मर्यमाणो विरुद्धो यः साम्येनाथ विवक्षितः ।
अङ्गिन्यङ्गत्वमाप्तौ तौ न दुष्टौ परस्परम् ॥१४०॥
[का॰ प्र॰ VII. 65 ]

तत्र स्मर्यमाणत्वेनाविरोधो यथा—

अयं स रशनोत्कर्षी पीनस्तनविमर्दनः ।
नाभ्यूरुजघनस्पर्शी नीवीविस्रंसनः करः ॥
[ म॰ भा॰ स्त्रीपर्व, का॰ प्र॰ VII. 336 ]

समरभुवि पतितं भूरिश्रवसो भुजमालोक्य तद्वधूनां वचनमिदम् । तथा च शृङ्गाराङ्गमपि पूर्वावस्था स्मर्यमाणतयोद्दीपनविभावत्वेन करुणपरिपोषिकेत्यदोषः ॥

साम्यविवक्षया यथा—

राममन्मथशरेण ताडिता दुःसहेन हृदये निशाचरी ।
गन्धवद्रुधिरचन्दनोक्षिता जीवितेशवसतिं जगाम सा ॥
[ रघु॰ XI. 20 ]

१ विरुद्धोपि in का॰ प्र॰

अत्र शृङ्गारबीभत्सयोर्विरोधेऽपि शृङ्गार उपमानं बीभत्सश्चोपमेयः। एवं ह्यत्र प्रतीयते—यथा कापि जीवितेशस्य कान्तस्य वसतिं प्रयाति तथा सा मृत्युसदनं जगामेति न विरोधः॥ एकत्र अङ्गिनि द्वयोर्विरुद्धयोरङ्गत्वं द्विधा तुल्यकक्षतया अङ्गाङ्गिभावेन, साक्षात् परस्याङ्गभावमासाद्य वा। न तत्रापेन विरोधः। यथा—

क्रामन्त्यः क्षतकोमलाङ्गुलिगलद्रक्तैः सदर्भाः स्थलीः
पादैः पातितयावकैरिव गलद्बाष्पाम्बुधौताननाः।
भीत्या भर्तृकरावलम्बितकरास्त्वद्वैरिनार्योऽधुना
दावाग्निं परितो भ्रमन्ति पुनरप्युद्यद्विवाहा इव।

[ Quoted in का॰ प्र॰ VII. 338 ]

अत्र राजविषया कविरतिः प्रधानम्। तत्र करुणशृङ्गारावुभावपि साक्षादङ्गमिति तन्निर्वाहणैकरसाकुलयोस्तयोरेककार्योद्यतयोरिव भटयोः सहजो विरोधोपि न दोषाय। प्रतापे द्वयोरपि साक्षादेवाङ्गत्वेन तादृशोऽयं प्रभावो येनासां पुनर्विवाह उत्प्रेक्ष्यते इति प्रतापातिशये पर्यवसानात्॥

अङ्गाङ्गिभावेनापराङ्गतयाऽविरोधो यथा—

क्षिप्तो हस्तावलग्नः प्रसभमभिहतोऽप्याददानोंऽशुकान्तं
गृह्णन्केशेष्वपास्तश्चरणनिपतितो नेक्षितः संभ्रमेण।
आलिङ्गन्योऽवधूतस्त्रिपुरयुवतिभिः साश्रुनेत्रोत्पलाभिः
कामीवार्द्रापराधः स दहतु दुरितं शाम्भवो वः शराग्निः॥

[ अमरु॰ २; quoted in का॰ प्र॰ VII. 340 ]

अत्र शिवशराग्निप्रभावातिशयस्य करुणोऽङ्गं तस्य तु शृङ्गारः। एवमेव तत्र तत्र विभावनीयं भावनापरिपक्वबुद्धिभिरित्यलं बहुभाषणेन॥

इति श्रीमच्छुक्लभूदेवविरचिते रसविलासे दोषोद्धारो नाम
[ 39 a ] षष्ठः स्तबकः॥

---

१ भीता in का॰ प्र॰. २ त्वच्छत्रुनार्यो in का॰ प्र॰. ३ II निर्वाहणैक॰. ४ B साश्रुनेत्रो॰.

## सप्तम स्तबकः।

एवं निरूपित सपरिकरो रसरूपकाव्यस्यात्मा। इदानीं तस्य शरीरभूतस्य काव्यशब्दप्रतिपाद्यत्वरूपलक्ष्यतावच्छेदकाक्रान्तस्य लक्षणमुच्यते। तत्र च काव्यप्रकाशे—

तददोषौ शब्दार्थौ सगुणावनलङ्कृती पुनः क्वापि। इति

निर्दोषत्वादिविशेषणविशिष्टो शब्दार्थौ काव्यपदवाच्यौ।

[ का० प्र० I. ]

गुणस्य रसधर्मत्वेऽपि गुणपदं व्यञ्जकवर्णपरम्। अनलङ्कृतीत्यत्रानुदरा कन्येतिवन्नञोऽल्पार्थत्वम्। अल्पत्वं चास्फुटत्वम्। एवं च सर्वत्र सालंकारौ शब्दार्थौ काव्य, क्वचित् स्फुटालकारत्वविरहेऽपि न काव्यत्वहानि। नीरसेऽपि अस्फुटालकारे काव्यत्वमेव। दोषाभावस्त्वावश्यक। तथाह दण्डी—

तदल्पमपि नापेक्ष्यं काव्ये दुष्टं कथंचन।
स्याद्वपु सुन्दरमपि श्वित्रेणैकेन दुर्भगम् ॥१४१॥ इति।

[ काव्यादर्श I. 7]

प्रदीपकृतस्तु – नीरसे स्फुटालंकारविरहिणि न काव्यत्वम्। यतो रसादिरलंकारश्च द्वय चमत्कारहेतु। तथा च—यत्र रसादीनामवस्थानं न च तत्र स्फुटालकारापेक्षा। नीरसे तु यदि न स्फुटोऽलकार स्यात्किंकृतश्चमत्कार स्यात्। चमत्कारसार च काव्यम्। तथा च स्फुटालकाररसान्यतरवत्व काव्यत्वमिति लक्षणम्। रसवत्यनलकारे काव्यत्वमिष्टमित्याहु ॥

नव्यास्तु रसदोषाभावयोरन्यतरद् विशेषणम्। दोषाभावमात्रविशेषणत्वे काव्यपद निर्विषय स्यात्। यावद्दोषोत्सारणस्य दु साध्य [ 39 d ] त्वान्। तथा [illegible] दुष्टेऽपि रसान्वये काव्यत्वमेव परं त्वपकर्ष। तदुक्तम्—

---

१ The discussion in this chapter is found in similar terms in काव्यप्रकाश, काव्यप्रदीप, रसगगाधर परमलघुमञ्जूषा, द्वैतविवेक, तर्कप्रकाश etc and there is hardly a passage which the author can claim as his own २ B नापेक्ष्. ३ काव्ये in काव्यादर्श (Cal ed ). ४ नव्यास्तु is a clear reference to र० गं०.

कीटानुविद्धरत्नादिसाधारण्येन काव्यता ।
दुष्टेष्वपि मता यत्र रसस्यानुगमः स्फुटः ॥१४२॥ इति ।
[Quoted in का० प्रदीप I.]

किं च दुष्टस्याकाव्यत्वे काव्यं दुष्टमिति व्यवहारो न स्यादित्याहुः ॥

साहसिकास्तु[1]—रमणीयार्थप्रतिपादकः शब्दः काव्यं न तूभयम् । काव्यं पठ्यते, श्रूयते, काव्यार्थो ज्ञायते, काव्यं श्रुतमर्थो न ज्ञात इति विश्वजनीनव्यवहारात् । किं च—वेदेऽपि शब्दार्थद्वयस्यैव त्वदुक्तरीत्या वेदत्वं स्यात् । न चेष्टापत्तिः ।

कपिलादुग्धपानेन ब्राह्मणीगमनेन च ।
वेदाक्षरविचारेण शूद्रश्चण्डालतां व्रजेत् ॥
न तस्माच्छृणुयाच्छूद्रो ज्ञात्वा वेदं कदाचन ।
तदर्थं च पुराणेषु शृणुयान्मुनिभिः स्मृतम् ॥ इति ।
[ ]

अनेन शब्दमात्रश्रवणस्यैव निषेधात् । वेदत्वं शब्दमात्रधर्म एवेति सिद्धान्तात् । रमणीयत्वं च लोकोत्तरचमत्कारज्ञानविषयत्वम् । चमत्कारत्वं च सुखनिष्ठो जातिविशेषः । किं च काव्यत्वं द्वयोः पर्याप्तं प्रत्येकं वा । नाद्यः—एको न द्वावितिवत् शब्दो न काव्यमिति व्यवहारापत्तेः । नान्त्यः—एकस्मिन्नपि पद्ये काव्यद्वयमिति व्यवहारस्य प्रसङ्गादिति प्राहुः ॥

अथ रसः काव्यात्मकया वृत्त्या प्रतीयते [40a]इत्याकांक्षायां न तावदभिधालक्षणाभ्यामपि तु व्यञ्जनामात्रेणेति प्रतिपादयितुं क्रमेणाभिधालक्षणाव्यक्तयो निरूप्यन्ते ॥

तत्र शक्त्या प्रतिपादकत्वमभिधा । शक्तिश्चास्माच्छब्दादयमर्थो बोद्धव्य इत्याकारिका ईश्वरेच्छा समयसङ्केतपदाभिधेया । सा च विशेष्यतयार्थे विशेषणतया शब्दे च । अयं शब्द एतमर्थं बोधयतु इतीश्वरेच्छाकारो यदि तदा विशेष्यतया शब्दे विशेषणतया चार्थे वर्तमानः शब्दार्थयोः संबन्धः । तार्किकमते चाभिधापदेन शक्तिरेवाभिधीयते । आलंकारिकमते परमयं विशेषो ·

१ साहसिकास्तु is another instance of clear reference to र० गं०. २ B has marg. note on वृत्त्या : एतेनाभिधादयस्त्रयो वृत्तिभेदा इति सूचितम्. ३ Cf र० गं० p. 140.

यद् एतादृशशक्तिसहकारेणार्थप्रतिपादकत्वं शब्दनिष्ठमभिधापदेनाभिधीयते। सा चाभिधा त्रिधा–रूढि , योग योगरूढिश्च । अखण्डशक्तिमात्रेणैकार्थ प्रतिपादकत्वं रूढि । तन्मात्रेण प्रतिपादकत्वं अवयवार्थाप्रतिभासाद् यथा गोघटादिपदे। अवयवशक्तिमात्रसापेक्ष पदस्यैकार्थप्रतिपादकत्वं योग । तन्मात्रसापेक्षता च समुदायार्थप्रतिभासात् । यथा पाचकपाठकादिपदे। अवयवसमुदायोभयशक्तिसापेक्ष पदस्यैकार्थप्रतिपादकत्वं [40b] योगरूढि । यथा पङ्कजसरोजजलजादिपदे। अत्रावयवशक्तिमपेक्ष्य पङ्कजनिकर्तृत्वे नोपाधिना समुदायशक्तिमपेक्ष्य पद्मत्वेन जात्या च पङ्कजपदेन कमलरूप एकार्थं प्रतिपाद्यते इति योगरूढि । अत्र पङ्कजनिकर्तृ पद्ममिति बोधस्या कार । कश्चिद्योगरूढिमत पदस्य विपयविशेषेऽवयवार्थानन्वयात् समुदाय शक्तिमात्रे विश्रान्ति ॥

यथा—

वत्फुल्लस्थलनलिनीवनादमुष्मा
' दुद्भूत सरसिजसभव पराग ।
वा यामिर्वियति विवर्तित समन्ता–
दाधत्ते कनकमयातपत्रलक्ष्मीम् ॥
[ ]

अत्र स्थलनलिनीसरोऽधिकरणावच्छिन्नजनिकर्तृत्वस्य बाधात् रूढि मात्रे विश्रान्ति । यत्र समुदायार्थानन्वयस्तत्र योगमात्रे विश्रान्ति ॥ यथा—

कह्लारकैरवमुखेष्वपि पङ्कजेषु
लोकेषु यत्कमलमेव तथा प्रसिद्धम्।
मन्येऽभिजातभवदास्यतुलास्य नेति
मर्मप्रकाशनमिद विधिनैव क्लृप्तम् ॥
[ ]

अत्र पङ्कजपदस्य कैरवकह्लारादिषु समुदायार्थानन्वयाद् योगमात्रम्। इय चाभिधा अनेकशक्तिकशब्दस्थले सयोगाद्यैर्नियम्यते। एकार्थमात्रोप-स्थित्यनुकूला क्रियते इति यावत् ॥ यदाहु —

सयो[41a]गो विप्रयोगश्च साहचर्यं विरोधिता ।
अर्थ प्रकरण लिङ्ग शब्दस्यान्यस्य सनिधि ॥१४३॥

सामर्थ्यमौचिती देश कालो व्यक्ति स्वरादय ।
शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतव ॥१४४॥ इति

[वाक्यपदीय का० प्र० II]

तत्र संयोग प्रसिद्धार्थस्य गुणविशेषरूप सबन्ध । तेनाभिधा नियमन यथा– 'सशखचक्रो हरि' इत्यत्र शङ्खादिसयोगेनानकार्थस्य हरिशब्दस्याच्युतेऽभिधा नियम्यते । अन्यहरिपदार्थे तत्सयोगाभावात् ॥

विप्रयोगस्तादृशसबन्धध्वस । तेन यथा—अशखचक्रो हरिरित्यत्र । ध्वसस्य प्रतियोगिपूर्वकत्वात् ॥

साहचर्यं सहचरता । तेन यथा—रामलक्ष्मणावित्यत्र रामपदस्य लक्ष्मणसाहचर्येण दाशरथौ ॥

विरोध सहानवस्थान, वध्यघातकभावश्च । तेन यथा—छाया तपावित्यत्र कान्त्यादौ शक्तत्वेऽपि छायापदस्यातपाभावे । विरोधिनो कयो श्चित्तत्त्वोपमाया रामार्जुनगतिस्तयोरित्यत्र रामार्जुनपदयोर्भार्गवकार्तवीर्ययो ॥

अर्थ प्रयोजनम् । तेन यथा— 'स्थाणु भज भवच्छिदे' इत्यत्र भवच्छेदरूपप्रयोजनवशात् स्थाणुशब्दस्य भवे ॥

प्रकरणम्—वक्तृश्रोतृबुद्धिस्थता । तेन यथा— सर्वं जानाति देव इत्यत्र देवशब्दस्य राजनि ॥

लिङ्ग—सयोगातिरिक्तसम्बन्धे परपक्षव्यावृत्ता धर्म । तेन यथा—'कुपितो मकरध्वज' इत्यत्र मकराकारध्वजसमुद्राभ्या व्यावृत्तेन समवायसम्बन्धवता कोपेन मकरध्वजशब्दस्य कामे । यत्तु लिङ्ग चिह्नमिति तन्न । कोपस्य कामचिह्नत्वाभावात् । असाधारणधर्मस्य चिह्नत्वात् । सशख चक्र इत्यत्रातिव्याप्तिप्रसङ्गाच्च ॥

शब्दस्यान्यस्य संनिधि —नियतार्थकशब्दान्तरसामानाधिकरण्यम् । तेन यथा—'देवस्य त्रिपुराराते' इत्यत्र उभयशब्दसमानविभक्तिकत्वत्वशाद् देवशब्दस्य शम्भुरूपेऽमरे । अन्यदेवशब्दार्थस्य राज्ञस्त्रिपुरारातित्वाभावात् ।

[1] The definitions and illustrations of संयोग etc are all taken from काव्यप्रकाश and काव्यप्रदीप

सामानाधिकरण्योपादानान्न भवच्छिद् इत्यत्रातिव्याप्तिः। न च सशंखचक्रो हरिरित्यत्रातिव्याप्तिः। तत्र सशङ्खपदस्य सामानाधिकरण्येऽपि न सशंखचक्रपदसामानाधिकरण्यम्। यद्वा हरौ शंखचक्रे इति संयोगोदाहरणे तात्पर्यम् ॥

सामर्थ्यं कारणत्वम्। तेन यथा—'मधुना मत्तः कोकिलः' इत्यत्र मधुशब्दस्य वसन्ते। अन्यस्य मधुशब्दार्थस्य कोकिलमादनासामर्थ्यात् ॥

औचिती अर्हता। तया यथा—'पातु वो दयितामुखम्' इत्यत्र उत्कण्ठितमनोरथसाधनौचित्येन मुख[42a]शब्दस्य साम्मुख्ये न तु वदनादौ। यद्यप्यत्रापि सामर्थ्यं सम्भवत्येव तथापि मधुनेत्यत्र तृतीया करणत्वार्थकतया तद्बोधिका, न तु प्रकृतेऽपि। तथाप्यौचित्यज्ञानमात्रादेव शक्तिनियमनमसंकीर्णमिति ॥

देशेन यथा—'भात्यत्र परमेश्वर' इति। अत्रेति राजधानीरूपादेशात् परमेश्वरपदस्य राजनि ॥

कालेन यथा—चित्रभानुर्विभातीत्यत्र चित्रभानुशब्दस्य दिवा दिवाकरे रजन्यामाशुशुक्षणौ ॥

व्यक्तिर्लिङ्गं पुंस्त्वादि तया यथा—मित्रं भातीत्यत्र नपुंसकरूपात् लिङ्गात् मित्रपदस्य सुहृदि। मित्रो भातीत्यत्र पुल्लिङ्गात् सूर्ये।

स्वरेण यथा—'सुधाकरमुखस्य दृष्टिः पङ्कजवैरिणी' इत्यत्र पङ्कजस्य वैरिणी तिष्ठतीति तत्पुरुषव्यक्तिर्यन्तोदात्तता। षष्ठीतत्पुरुषव्यक्तौ च पङ्कजस्य वध्यत्व दृष्टेश्च घातकत्व लभ्यते। तथा चोदात्तादिस्वरोऽभिधानियामक ॥

स्पष्टार्थ इत्यादिग्रहणात् अभिनयापदेशौ गृह्येते। अभिनयश्च साक्षादिवार्थाकारादिप्रदर्शिका चेष्टा, हस्तादिक्रियेति यावत् ॥

तया यथा—

[42b] पाणिद्वयदर्शितसन्निवेशौ
पक्वपराभूतसरोजकोशौ।
इमावियन्तौ पुनरेषमस्ते
कुचौ कियन्तौ परतो भवेताम् ॥
[ । ]

इत्यत्र तत्कालस्तनपरिमाणप्रदर्शकहस्तव्यापारेण इयत्पदस्य परिमाणविशेषे ॥

अपदेशोऽभिमतनिर्देशः। स च हृदये हस्तनिक्षेपादिरूपः॥

तेन यथा—

> इतः स दैत्यः प्राप्तश्रीर्नेत एवार्हति क्षयम्।
> विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसांप्रतम्॥
> [कुमार॰ II. 55; quoted in का॰ प्र॰ II. 31.]

इत्यत्र इत इति स्वात्मनिर्देशेन तस्य वक्तरि परमात्मनि नियम्यते॥

यथा—

> येन ध्वस्तमनोभवेन बलिजित्कायः पुराऽस्त्रीकृतो
> यश्चोद्वृत्तभुजङ्गहारवलयो गङ्गां च योऽधारयत्।
> यस्याहुः शशिमच्छिरोहर इति स्तुत्यं च नामामराः
> पायात्स स्वयमन्धकक्षयकरस्त्वां सर्वदोमाधवः॥
> [Quoted in का॰ प्र॰ VII. 302]

अत्र शिवकेशवयोर्द्वयोरपि स्तुत्यतया प्रकरणमविशिष्टम्। असौ ध्वस्तमनोभवेन नाशितमन्मथेन येन बलिजित्कायो विष्णुदेहः पुरेषु अस्त्रतां नीतः। यश्चोद्वृत्तशेषवासुकिप्रभृतिनागसंपादितहारवलयकृत्यः। यश्च गङ्गामधारयत्। यस्य शिरः शशिमदाहुः। अमराः स्तुत्यं च नाम हर इत्याहुः। अन्धकासुरक्षयकरः स उमाधव[43a]स्त्वां सर्वदा पायात् इति॥ अभवेन निःसंसारेण येन। अनः शकटं ध्वस्तं येन च बलिजित्त्वस्य कायः पुरामृतमथनावसरे स्त्रीत्वं नीतः। यश्चोद्वृत्त भुजङ्गं कालीयं हतवान्। रवे शब्दब्रह्माणि लयस्तादृप्यापत्तिरस्येति रवलयः। उद्वृत्तभुजङ्गान् हतवदर-बलयं चक्रमस्येति एकं पदं वा। अगं गोवर्धनं गां वराहावतारे भूमिं च योऽधारयत्। यस्य स्तुत्यं नाम शशिमच्छिरोहर इत्याहुः। शशिनं मथ्नाति यो राहुस्तच्छिरोहर इति। अन्धकानां राज्ञां क्षयकरो निवासकृत्। सर्वदो माधवस्त्वां पायादिति चार्थद्वयेऽप्यभिधैव व्यापारः। अत एवात्र श्लेषोऽलंकारः। ननु यत्र यत्रानेकत्र प्रकरणादि अविशिष्टं तत्र भवत्वनेकत्रापि अभिधाव्यापारः। यत्र प्रकरणस्य कस्मिंश्चिदर्थे व्यवस्थितेऽपि[1] अप्राकरणिक-शब्दान्तरं प्रतीयते तत्र का गतिः॥

---

1 B व्यवस्थितेऽपि.

यथा—

भद्रात्मनो दुरधिरोहतनोर्विशाल-
वंशोन्नतेः कृतशिलीमुखसंग्रहस्य।
यस्यानुपप्लुतगतेः परवारणस्य
दानाम्बुसेकसुभगः सततं करोऽभूत्॥
[Quoted in का॰प्र॰ II. 15]

अत्र प्रकरणेन भद्रात्मन इत्यादिपदानां राजनि तदन्वययोग्ये चार्थे प्रकरणेनाभिधानियम[43b]नेऽपि अप्राकरणिको गजस्तदन्वयी चार्थः प्रतीयते॥

अत्राहुः—तत्र शब्दशक्तिमूलो व्यञ्जनाव्यापार एव शरणम्। गत्यन्तराभावात्। न च तत्राप्यभिधा संभवति, प्रकरणे राजनि तस्या नियमनात्। नापि लक्षणा, मुख्यार्थबाधाद्यभावात्। तदेतदाहुः काव्यप्रकाशकृतः—

अनेकार्थस्य शब्दस्य वाचकत्वे नियन्त्रिते।
संयोगाद्यैरवाच्यार्थधीकृद्व्यापृतिरञ्जनम्॥१४५॥
[का॰ प्र॰ II. 19]

अञ्जनं व्यञ्जना। तस्मात्संयोगादिभिरभिधा शृंखलिता यत्र कुण्ठतामेति। अर्थान्तरावगमने व्यञ्जनमेव क्षमं तत्रेति फलितोऽर्थः॥

अथ लक्षणा निरूप्यते। सा च शक्यसम्बन्ध इति तार्किकाः। शक्यसम्बन्धेनाशक्यार्थप्रतिपादकत्वं शब्दनिष्ठ लक्षणेत्यालंकारिका[1]। तत्सादृश्येन प्रतिपादकत्वरूपा गौण्यपि लक्षणाप्रभेद एव। तत्सादृश्येऽपि तन्निरूपित सादृश्याधिकरणत्वरूपपरंपरासंबन्धसत्त्वात्। न हि साक्षात् संबन्धे विशिष्टबुद्धियोग्यसंबन्धे वा सत्येव लक्षणेति नियमः। चक्षुरादेर्घटनैल्यादिषु संयुक्तसमवायादिवद्विशिष्टबुद्धियोग्यस्य परंपरासंबन्धस्यापि प्रत्यासत्तित्वोपगमात्। व्यतिरेकलक्षणास्थलेऽपि तन्निरूपितविरोधाधिकरणत्वादिपरंपरासंबन्धेन तादृशेन लक्षणाभ्युपगमाच्च। तस्मात् सादृश्यगर्भतदन्यसंबन्धनिमित्ततया गौणी शुद्धा चेति लक्षणा द्विविधा। इयं च द्विविधापि लक्षणा प्रत्येकं द्विविधा। रूढिलक्षणा फललक्षणा च। रूढि[44a]लक्षणातुल्यतया रूढा[2] निरूढलक्षणा। विवक्षितार्थान्तर[3]द्योतनफला फललक्षणा॥

---

१ Cf काव्यप्रदीप II. २ B निरूढा. ३ A विवक्षितार्थान्तर°.

आद्या यथा—

नाम्नसा निगदितं विभक्तिभि-
व्यक्तिभिश्च निखिलाभिरागमे ।
तत्र कर्मसु विपर्ययेणैनमन्
मन्त्रमूहकुशलाः प्रयोगिणः ॥

[ ]

इत्यत्र कुशादानकर्तरि कुशलशब्दस्य मुख्यः प्रयोगस्तस्य [1] प्रकृते साक्षात् विवेचकत्वसादृश्येन चतुरे लक्षणा निरूढा । मुख्यार्थबाधः शक्य-सम्बन्धश्च सर्वत्र लक्षणाबीजम् । इदं गौण्या उदाहरणम् ॥

शुद्धा यथा—

कणद्द्विरेफावलिनीलकङ्कणं
प्रसार्य शाखाभुजमत्र वल्लरी ।
छलोपगूढा कलकण्ठकूजितै-
रनामयं पृच्छति दक्षिणानिलम् ॥

[ ]

अत्र द्विरेफशब्दस्य द्वौ रेफौ यस्येति व्युत्पत्त्या भ्रमरशब्दवृत्तेरत-द्वाच्ये निरूढलक्षणा । इयमेव लक्षितलक्षणेत्युच्यते । एवं त्वगादिशब्दानां त्वगिन्द्रियादिष्वपि शुद्धा रूढिलक्षणा द्रष्टव्या ॥

फललक्षणा—जहल्लक्षणा अजहल्लक्षणा जहदजहल्लक्षणा सारोपा साध्यवसाना च । गौणी शुद्धा चेत्येवं सप्तविधा फललक्षणा ।

जहल्लक्षणा यथा—

जटिला वल्कलधराः स्रोतस्विन्यां सुपर्वणाम् ।
यं वदान्यतया जेतुं तपस्यन्ति सुरद्रुमाः ॥

[ ? ]

अत्र स्रोतस्विनीपदस्य सुरद्रुमाधिकरणत्वयोग्ये तत्तीरे लक्षणा । मुख्यार्थस्य तदधिकरणत्वेनान्वयाभावात् जहल्लक्षणा । सुरद्रुमाणां तपस्योप-स्कारकं तीरस्यातिशयितपावनत्वद्योतनं फलम् । एवं गङ्गायां घोष इति

१ B om. प्रकृते. २ B वाच्येऽपि. ३ B रूढलक्षणा. ४ A स्रोतस्विनीपदं.

प्रसिद्धोदाहरणमप्यनुसंधेयम्। तत्र गोस्वामिनः प्रीतये नीरस्यातिशयितपावनत्वद्योतनं फलम्¹॥

व्यतिरेकलक्षणापि लक्षणाप्रभेद एव। यथा—

उपकृतं बहु नाम किमुच्यते
[44b] सुजनता भवता प्रथिता भृशम्।
विदधदीदृशमेव सदा सखे
सुखितमास्स्व ततः शरदां शतम्॥
[Quoted in का० प्र० IV. 24]

अत्रापकारिण्यन्वयायोग्ये उपकृतादिपदैः स्वार्थविरुद्धं लक्ष्यते। त्वयाऽपकारे क्रियमाणेऽपि मयैवं प्रियमेवोच्यते इति स्वस्य साधुत्वद्योतनं फलम्॥

अजहल्लक्षणा यथा—'कुन्ताः प्रविशन्ति'। 'यष्टयः प्रविशन्ति' इति। भीतिपलायमानवाक्ये कुन्तादिपदस्य तद्वत्पुरुषेषु लक्षणा। कुन्तादेरपि पुरुषसाहित्येन प्रवेशक्रियान्वयात् अजहल्लक्षणा। तेषां निर्दयप्रहर्तृत्वादिद्योतनं फलम्। ग्रामैकदेशदाहादौ सति ग्रामो दग्धः पुष्पितं वनमित्यादिप्रयोगे ग्रामादिपदस्य स्वार्थैकदेशपरित्यागेन तदेकदेशबोधे जहदजहल्लक्षणा। दग्धादिभूयस्त्वादिद्योतनं फलम्॥

सारोपा यथा—

केशान्धकारादथ दृश्यभाल-
स्थलार्धचन्द्रा स्फुटमष्टमीयम्।
एनां यदासाद्य जगज्जयाय
मनोभुवा सिद्धिरसाधि साधु॥
[नैषधीय० VII. 22]

अत्रार्धचन्द्रार्धान्धकारत्वेन निरूपितभालस्थलकेशाधिकरणत्वसादृश्यात् गौणी सारोपा²। इयमिति आरोपविषयदमयन्तीवाचकपदस्य अष्टमीति आरोप्यमाणाष्टमीवाचकपदयोरुभयोः पृथगुपादानात् आरोपः। ताद्रूप्यप्रतीतिः फलम्। मदनजगज्जयसिद्धौ इतरवैलक्षण्यं च फलम्। एवं³ 'गौ-

1 B अतिशयितपवित्रत्वद्योतनं. 2 B has marg. note : इयं गौणसारोपा तैत्तिरीये द्रष्टव्या. 3 वं in का० प्र०.

वाहीकः' 'मुखं कमलं' इत्यादौ व्यासे मुखचन्द्र इत्यादौ समासेऽपि सारोपलक्षणा द्रष्टव्या ॥

गौणी साध्यवसान[45a]लक्षणा यथा—

वापी कापि स्फुरति गगने तत्परं सूक्ष्मपद्या
सोपानालीमधिगतवती काञ्चनीमैन्द्रनीली[1] ।
अग्रे शैलौ सुकृतिसुलभौ चन्दनच्छन्नदेशौ
तत्रत्यानां सुलभममृतं संनिधानात्सुधांशोः ॥

[ कुवलयानन्द ]

अत्र वाप्यादिपदानां गम्भीरत्वादिसादृश्यात् गौणसाध्यवसायलक्षणा। सर्वथैवाभेदप्रतीतिः फलम्। विषयस्य विषयिभेदानपह्नवेन तद्रूपोपरक्ततामप्रतीतिस्ताद्रूप्यप्रतीतिः। विषयस्य विषयिणैवाभेदप्रतीतिः सर्वथैवाभेदप्रतिपत्तिरिति सारोपसाध्यवसायलक्षणयोः फलभेदः। विषयविषयिवाचकयोर्द्वयोरपि निर्देश आरोपः। विषयिपदमात्रस्य विषयलाक्षणिकतया निर्देशोऽध्यवसाय इत्यारोपाध्यवसानयोर्भेदः। ननु सारोपलक्षणोदाहरणे मुखेन्दुरित्यादौ इन्द्वादिपदस्य मुखार्थो न मुखत्वादिना लक्षणा। मुखादिपदस्यापि सत्त्वेन पौनरुक्त्यापत्तेः, नापीन्दुगतलावण्यादिगुणेन, अन्यगुणस्यान्यत्र प्रवृत्तिनिमित्तत्वायोगात्, नापि मुखगतलावण्यादिगुणेन, तन्मुख्यार्थसंबन्धरहितगुणमुखेन लक्षणायोगात्। मैवम्। मुखचन्द्रोभयानुगतलावण्यसामान्यमुखेन लक्षणोपगमे दोषाभावात् ॥

शुद्धसारोपा—'अमात्योऽयं राजा' इत्यादौ। अनुलङ्घ्यशासनत्वादिद्योतनं फलम्। एवममात्यपदानुपादाने राजेत्यत्र शुद्धसाध्यवसाना। [45b] निग्रहानुग्रहसामर्थ्यद्योतनं फलम्। एवममहास्त इत्यादयः प्रयोगा वत्तत्संबन्धभेदादवसेयाः। एवं शुद्धा पञ्चविधा, गौणी द्विविधेति सप्तविधा फललक्षणा ॥

अथ व्यञ्जना निरूप्यते। तत्र रसस्तावत् काव्यात् प्रतीयते इति सहृदयानुभवसिद्धम्। अतस्तत्र वृत्तिरङ्गीकार्या। वृत्त्यैव शब्दस्य प्रत्यायकत्वात्। अन्यथातिप्रसङ्गात्। तत्र न तावद्रसादिबोधनेऽभिधा व्याप्रियते।

१ B ऐन्द्रनीलाम्. २ B गौणी साध्यवसानलक्षणा. ३ B adds उपमेयस्य before विषयस्य. ४ B मुखत्वादि°. ५ B सकलसहृदयानुभव°.

तत्र संकेताभावात्। किं च विभावादिपदवाचकानां विभावादिमात्रशक्तत्वात् पदान्तरस्य चाभावात् केन रसाभिधानं स्यात्। न हि विभावाद्यभिधानमेव तदभिधानम्[1]। रसस्य तदेकरूप्यानभ्युपगमात्। प्रत्युत स्वपदाभिधाने रसदोषाङ्गीकार इति। यत्रापि 'शृङ्गाररसोपनतमधुना राज्यमेकातपत्रं' इत्यादौ शृङ्गारादिपदोपादानं तत्रापि विभावादिभ्य एवास्वादरूपा रसप्रतीतिर्न तु रसशृङ्गारादिपदादिति। न तेनाप्यभिधाशङ्का। घटकर्मत्वानयनकृतयः पदार्थाः एषां च परस्परं संसर्गस्तात्पर्यमर्यादया वाक्याद्भासते इति अभिहितान्वयवादिनां[2] तार्किकाणां मतेऽपि तात्पर्याख्या वृत्तिः संसर्गमात्रोपक्षीणा न व्यङ्ग्यप्रत्यायने व्यापारमपसारयति॥

केचित्तु—सोऽयमिषोरिव दीर्घदीर्घो[3] व्यापारः। यथा बलवता प्रेरित इषुरेकेनैव वेगाख्यव्यापारेण वर्मच्छेदमुरोभेदं प्राणापहरणं च [46a]करोति तथाऽभिधाख्यैकव्यापारे[4] शब्दपदार्थोपस्थितिं वाक्यार्थप्रत्ययं व्यङ्ग्यप्रत्ययं च करोतीति न व्यञ्जनाव्यापारसिद्धिरिति, तन्न। शब्दबुद्धिकर्मणां विरम्य व्यापाराभावात्। किंचैवं लक्षणापि नाङ्गीकार्या स्यात्। दीर्घदीर्घाभिधाव्यापारेणैव तीरादिप्रतीतिसिद्धेः॥

अपि च—'ब्राह्मण पुत्रस्ते जातः' 'कन्या ते गर्भिणी' इत्यादौ मुखप्रसादमुखमालिन्याभ्यां हर्षशोकयोरनुमानमिति सर्वसिद्धान्तः, तत्रापि हर्षशोकयोरभिधैव व्यापारः स्यात्। दीर्घदीर्घाभिधाव्यापारस्य[5] तावदपि प्रसारसंभवात्॥

यत्तु—यत्परः शब्दः स शब्दार्थ इति न्यायात् रसः शब्दार्थ इति, तत्रोच्यते। किमिदं तत्परत्वं? तदर्थत्वं वा तात्पर्यवृत्त्या तद्बोधकत्वं वा। आद्ये न विवादः। व्यङ्ग्यत्वेऽपि तदर्थतानपायात्। द्वितीये तु केयं तात्पर्याख्या वृत्तिरभिहितान्वयवादिभिरङ्गीकृता तदन्या वा। आद्ये दत्तमेवोत्तरम्। द्वितीये तु अतिरिक्तवृत्तिनाममात्रे विवादः न तु अतिरिक्तवृत्तौ। किं च नैयायनये[6]ऽभिधा शब्दार्थोभयनिष्ठा, आलंकारिकमते च शब्दमात्र-

१ A B have a marg. note on तदभिधानं as तस्य रसस्य. २ A अभिधान्वयवादिनां. ३ Cf का० प्र० V. ४ B ॰व्यापारेण. ५ Cf का० प्र० V. ६ B नैयायिकनये.

निष्ठा। व्यञ्जना तु क्वचित् केवलमर्थमात्रे इति कथं शब्दव्यापारेणाभिधया-ऽन्यथासिद्धा ॥

अर्थनिष्ठा चोक्ता काव्यप्रकाशकारैः—

वक्तृबोद्धव्यकाकूनां वाक्यवाच्यान्यसंनिधेः ।
प्रस्ताव[46b]देशकालादेर्वैशिष्ट्यात् प्रतिभाजुषाम्
योऽर्थस्यान्यार्थधीहेतुर्व्यापारो व्यक्तिरेव सा ॥१४६॥ इति ।
[ का० प्र० III. 22 ]

बोद्धव्यः प्रतिपादनीयो जनः । अतो न वाच्येन सहाभेदः। काकुः शोकभीत्यादिभिर्ध्वनेर्विकारः। वाक्यवाच्ययोः सहितोऽन्यसंनिधिः वाक्यवाच्यान्यसंनिधिः । प्रस्तावः प्रकरणम् । वैशिष्ट्यं वैलक्षण्यम् । तच्च वक्त्रादिषु प्रत्येकमभिसंबध्यते। अन्योऽर्थो वाच्यलक्ष्यव्यतिरिक्तः। व्यक्तिर्व्यञ्जना करणव्युत्पत्तेः । प्रतिभाजुषामित्यनेन नवनवोन्मेषशालिनी प्रज्ञा प्रतिभा या वासनेत्युच्यते। तस्यां सत्यामेव वक्तृवैशिष्ट्यादिसत्त्वेऽपि व्यङ्ग्यप्रतीतिरिति प्रतिपादितम्। अत एव वैयाकरणादीनां न तथ रसप्रतीतिः ॥

यथाक्रममुदाहरणानि—

अइपिहुलं जलकुम्भं घेत्तूण समागदम्हि सहि तुरिअं ।
समसेअसलिलणीसासणीसहा वीसमामि खणं ॥
[ Quoted in का० प्र० III. 13 ]

[ अतिपृथुलं जलकुम्भं गृहीत्वा समागतास्मि सखि त्वरितम्
श्रमस्वेदसलिलनिश्वासनिःसहा विश्राम्यामि क्षणम् ।]

अत्र वक्त्री कामिनी। तस्याः दुःशीलत्वं वैशिष्ट्य विशजतां चौर्य-रतगोपनं व्यज्यते ॥

ओण्णिद्दं दोब्बल्लं चिन्ता अलसत्तणं सणीससिअं ।
मह मन्दभाइणीए केरं सहि तुह वि अहह परिहवइ ॥
[ Quoted in का० प्र० III. 14 ]

[ औन्निद्र्यं दौर्बल्यं चिन्तालसत्वं सनिःश्वसितम् ।
मम मन्दभागिन्याः कृते सखि त्वामपि अहह परिभवति ॥ ]

१ Cf काव्यप्रदीप III.

अत्र दूती प्रतिपाद्या। तस्या अन्यदापि दृष्टदुष्टचेष्टाया वैशिष्ट्येन तस्याः कामुकोपभोगो व्यज्यते॥

तथाभूतां दृष्ट्वा नृपसदसि पाञ्चालतनयां
वने व्याधैः सार्धं सुचिरमुषि[47a]तं वल्कलधरैः।
विराटस्यावासे स्थितमनुचितारम्भनिभृतं
गुरुः खेदं खिन्ने मयि भजति नाद्यापि कुरुषु॥
[ वेणी॰ I. 11; quoted in का॰ प्र॰ III. 15 ]

खेदो मात्सर्यम्। अत्र 'खेदं मयि भजति नाद्यापि कुरुषु' इति काकोर्वैशिष्ट्यात् मयि न योग्यं कुरुषु पुनर्योग्यं मात्सर्यमिति व्यज्यते॥

तइआ मह गण्डत्थलणिमिअं दिट्ठिं ण णेसि अण्णत्तो।
एण्हिं सच्चेअ अहं ते अ कवोला ण सा दिट्ठी॥
[ तदा मम गण्डस्थलनिमग्नां दृष्टिं नानैषीरन्यत्र।
इदानीं सैवाहं तौ च कपोलौ न सा दृष्टिः॥ ]
[ Quoted in का॰ प्र॰ III. 16 ]

वाक्यमनेकपदं तेनात्र तदेदानीं पदात्मकवाक्यवैशिष्ट्यात् मत्सखीकपोलप्रतिबिम्बितां पश्यतस्ते दृष्टिरन्यादृश्येवाभूत्। चालितायां तु तस्यामन्यादृशीत्यहो प्रच्छन्नकामुकत्वं तवेति व्यज्यते॥

पअ णिच्चलणिप्फन्दा भिसिणीपत्तम्मि रेहइ बलाआ।
णिम्मलमरगअभाअणपरिट्ठिआ संखसुत्तिव्व॥
[ गाथास॰ I.4; quoted in का॰ प्र॰ II. 8]
पश्य निश्चलनिष्पन्दा बिसिनीपत्रे राजते बलाका।
निर्मलमरकतभाजनपरिस्थिता शङ्खशुक्तिरिव॥

अत्र निश्चलनिष्पन्देति बलाका रेजते इत्यात्मकवाक्यवैशिष्ट्यात् बलाकाया आश्वस्तत्वं,तेन निर्जनत्वं, तेन च सुरतयोग्यं स्थलमेतदिति व्यज्यते॥

उद्देशोऽयं सरसकदलीश्रेणिशोभातिशायी
कुञ्जोत्कर्षाङ्कुरितरमणीविभ्रमो नर्मदायाः।
किं चैतस्मिन् सुरतसुहृदस्तन्वि ते वान्ति वाता
येषामग्रे सरति कलिताकाण्डकोपो मनोभूः॥
[ Quoted in का॰ प्र॰ III. 17 ]

अत्र नर्मदादेशरूपस्य तद्विशेषणीभूतकुञ्जादिरूपस्य वाच्यस्य यथोक्त-विशेषणस्य वैशिष्ट्यात् सुरता[47b]र्थं प्रविशेति व्यज्यते ॥

णोल्लेइ अणोल्लमणा अत्ता मं घरभरम्मि सअलम्मि ।
खणमेत्तं जइ संझाइ होइ ण व होइ वीसामो ॥
[ Quoted in का॰ प्र॰ III. 18 ]

[ नुदत्यनार्द्रमनाः श्वश्रूर्मां गृहभरे सकले ।
क्षणमात्रं यदि संध्यायां भवति न वा भवति विश्रामः ॥]

अन्यसंनिधिः संनिहितोऽन्यः । तेनात्र प्रतिवेशिनीं प्रति प्रवर्तिते वाक्ये प्रच्छन्नपुरुषरूपस्यान्यस्य संनिधेर्वैशिष्ट्यात् संनिहितं प्रति संध्या संकेतसमय इति व्यज्यते ॥

सुव्वइ समागमिस्सदि तुज्झ पिओ अज्ज पहरमेत्तेण ।
एमेअ किं ति चिट्ठसि ता सहि सज्जेसु करणिज्जं ॥
[ Quoted in का॰ प्र॰ III. 19 ]

[श्रूयते समागमिष्यति तव प्रियोऽद्य प्रहरमात्रेण ।
एवमेव किमिति तिष्ठसि तत्सखि सज्जय करणीयम् ॥]

अत्र प्रकरणस्य प्रस्तावस्याभिसारसंबन्धित्वरूपवैशिष्ट्यात् उपपतिं प्रत्यभिसर्तुं न योग्यमिति व्यज्यते ॥

अन्यत्र यूयं कुसुमावचायं
कुरुध्वमत्रास्मि करोमि सख्यः ।
नाहं विदूरं भ्रमितुं समर्था
प्रसीदतायं रचितोऽञ्जलिर्वः ॥
[ Quoted in का॰प्र॰ III. 20 ]

अत्र देशस्यातिविविक्तत्वादिरूपवैशिष्ट्यात् वक्तृवैशिष्ट्यादिसहितात् प्रच्छन्नकामुकस्त्वया प्रहेय इति प्रियसखीं प्रति व्यज्यते ॥

गुरुअणपरवस पिअ किं भणामि तुह मन्दभाइणी अहकं ।
अज्ज पवासं वचसि वच सअं जेव्व सुणसि करणिज्जं ॥
[ Quoted in का॰ प्र॰ III. 21 ]

---

१ B °विविक्तत्व°.

[ गुरुजनपरवश प्रिय किं भणामि तव मन्दभागिनी अहकम् ।
अद्य प्रवासं व्रजसि व्रज स्वयमेव ज्ञास्यसि करणीयम् ॥]

अत्राद्यपदप्रतिपाद्यमधुसमयवैशिष्ट्यात् वक्तुरवस्थाविशेषसहितात् इदानीं यदि व्रजसि तदाहं तावन्न जीवामि, तव तु न जानामि गतिमिति व्यज्यते प्रियं प्रत्यनुरक्तया कयाचित् ॥

आ[48a]दिग्रहणाच्चेष्टादेः । तत्र चेष्टया यथा—

द्वारोपान्तनिरन्तरे मयि तया सौन्दर्यसारश्रिया
प्रोल्लास्योरुयुगं परस्परसमासक्तं समासादितम् ।
आनीतं पुरतः शिरोंशुकमधः क्षिप्ते चले लोचने
वाचस्तत्र निवारितं प्रसरणं संकोचिते दोर्लते ॥
[ Quoted in का॰ प्र॰ VII. 22 ]

अत्रोरुसमासङ्गादिचेष्टावैशिष्ट्यात् प्रच्छन्नकामुकविषय आकूतविशेषो व्यज्यते । तत्र प्रथमार्धेनालिङ्गनम् । शिरोंशुकं पुरत आनीतमिति अनेन गृहमागच्छेति । 'अधःक्षिप्ते चले लोचने' इत्यनेन सूर्यास्ते । 'वाचः प्रसरनिवारणेन' कोलाहलरहिते काले समागन्तव्यमिति । 'संकोचिते दोर्लते' इत्यनेन पारितोषिकमालिङ्गनं ते करोमीति व्यज्यते । इति एवमेवुदाहरणेषु सर्वत्रार्थमात्रे व्यञ्जनेत्यभिधातो भिन्ना । वाच्योऽर्थः शक्तिज्ञानवद्भिरवगम्यते व्यङ्ग्यस्तु सहृदयैरेवेति बोधभेदोऽपि व्यञ्जनायाम् ॥

निःशेषच्युतचन्दनं स्तनतटं निर्मृष्टरागोऽधरो
नेत्रे दूरमनञ्जने पुलकिता तन्वी तवेयं तनुः ।
मिथ्यावादिनि दूति बान्धवजनस्याज्ञातपीडागमे
वापीं स्नातुमितो गतासि न पुनस्तस्याधमस्यान्तिकम् ॥
[ शीलाभट्टारिका; quoted in का॰ प्र॰ I, 2 ]

इत्यत्र तदन्तिकं न गतासीति निषेधः शक्यार्थः, गतासि तदन्तिकं रन्तुमिति विधिश्च व्यङ्ग्यः इति अर्थस्वरूपभेदोऽप्यभिधाव्यञ्जनयोः । किं[२] च, 'गतोऽस्तमर्कः' इत्यादौ वाच्यार्थ एक एव प्रतीयते । व्य[48b]ङ्ग्यस्तु तत्तत्प्रतिपत्त्रादिभेदेन नानैव भासते । तथा हि—राज्ञः सेनापतीन् प्रति

१ व्यञ्जनाभिधातो. २ Cf काव्यप्रदीप V.

शत्रूणामाहवेनावमर्दनावसर इति। दूतीनामभिसारिकां प्रति अभिसरणमुपक्रम्यतामिति। सख्या वासकसज्जां प्रति प्राप्तप्रायस्ते प्रेयानिति। कर्मकरस्य सह कर्म कुर्वाणं प्रति कर्मकरणान्निवर्तामहे इति। भृत्यस्य धार्मिकं प्रति सान्ध्यो विधिरुपक्रम्यतामिति। आप्तस्य कार्यवशेन बहिर्गन्छन्तं प्रति दूरं गता इति। गृहिणो गोपालं प्रति सुरभयो गृहं प्रवेश्यन्तामिति। दिवसेऽतिसंतप्तस्य बन्धून् प्रति संतापोऽधुना न भवतीति। आपणिकानां भृत्यान् प्रति विक्रेयवस्तूनि संह्रियतामिति। नायकागमनप्रस्तावे प्रोषितभर्तृकायास्तत्कथकं प्रति नागतोऽद्य मे प्रेयानिति निरवधिर्व्यङ्ग्योऽर्थः प्रकाशते। वाच्यस्त्वेक एव इति अभिधाव्यञ्जनयोरर्थसंख्याभेदाद्भेदः॥

वाच्योऽर्थः शब्दोच्चारणमात्रादेव प्रतीयते, व्यङ्ग्यस्तु प्रतिभानैर्मल्यादिति निमित्तभेदः। वाच्यस्तु अचमत्कारकारी, व्यङ्ग्यस्तु चमत्कारकारीति प्रतीतिमात्रभेदः। वाच्यः पूर्वं, व्यङ्ग्यः पश्चात्प्रतीयते इति कालभेदः। अभिधा शब्दाश्रया, व्यञ्जना तु पदतदेकदेशतदर्थवाक्यतदर्थवर्णतद्रस्तीकुमार्यकाठिन्यादिविशेषरचनाद्याश्रया इत्याश्रयभेदः॥

[49a]कस्स व ण होइ रोसो दट्ठूण पिआएँ सव्वणं अहरं।
सभमरपउमग्घाइणि वारिअवामे सहसु एण्हिं॥
[ Quoted in का॰ प्र॰ V. 135 ]
[ कस्य वा न [3]भवेद्रोषो दृष्ट्वा प्रियायाः सव्रणमधरम्।
सभ्रमरपद्माघ्राणशीलवारिता मया सहस्वेदानीम्॥ ]

अत्र नेदमुपपत्यधरदंशनकृतमपि तु सभ्रमरपद्माघ्राणजनितमिति कान्तः। नैतादृशमकृत्यमन्यदा विधेयं यत्तु यथाकथंचित् समाहितमिति कान्ता च कयाचित् प्रतिपाद्यते इति विषयभेदः। किं च रसनात्मव्यापारभिन्नरसादिपदप्रतिपाद्यप्रमाणान्तरासिद्धरसाभावाच्च न तत्राभिधा॥

पूर्वसिद्धमेव हि घटादिकमभिधया बोध्यते। अत एव लक्षणापि न व्यङ्ग्यबोधनक्षमा। न हि 'शून्यं वासगृहं' इत्यादौ मुख्यार्थबाधः, न वा तद्योगः, शक्यसंबन्ध इत्यर्थः। असबद्धस्य आत्मन एव व्यङ्ग्यत्वात्। न च रसे लक्ष्ये प्रयोजनान्तरम्, स्वस्यैव प्रयोजनपटुत्वात्। गङ्गायां घोष

१ B गृहे. २ II प्रतीतिभेदः. ३ भवति in का॰ प्र॰ ४ सभ्रमरपद्माघ्रायिणि in का॰ प्र॰ ५ वारितवामे in का॰ प्र॰.

इत्यादौ च प्रयोजनस्यापि लक्ष्यत्वेऽनवस्थाप्रसङ्गात्। न च तद्विशिष्टे लक्षणा। विषयप्रयोजनयोर्युगपत्प्रतीत्यनभ्युपगमात्। घटादिज्ञानानन्तरं प्रयोजनी भूतज्ञाततया अनुव्यवसायेनैव ग्रहात्॥

ननु 'शून्यं वासगृहम्' इत्यादौ अभ्युपगम्यते तावद्विभावादिवाचकपदानां रसप्रतीतौ तात्पर्यम्। अन्यथा निष्प्रयोजनत्वात्। तन्निर्वाहश्च लक्षणया। तथा हि—चुम्बनालिङ्गनादिचेष्टानां रत्यादिभिः सहाविनाभावो दृष्टः। ते चुम्बनादयः काव्येऽभिधीयमाना रत्यादिकं लक्षयन्ति। 'अभिधेयाविनाभूतप्रतीतिर्लक्षणोच्यते' इति लक्षणालक्षणात्। लक्षि[49b] तश्च रत्यादिर्वाक्यार्थः प्राधान्येन बोध्यत्वात्॥

यदाहु —

वाच्याप्रकरणादिभ्यो बुद्धिस्था वा यथा क्रिया।
वाक्यार्थः कारकैर्युक्ता स्थायी भावस्तथेतरैः॥ १४७॥ इति॥
[दशरू॰ IV 35]

इतरैः विभावादिभिः। लक्षणानभिमानस्तु मुख्यार्थानवधारणात्। किं च। मुख्यार्थबाधाभावेऽपि तात्पर्यानुपपत्तितः 'यष्टीः प्रवेशय' इत्यादौ लक्षणाङ्गीकारविलेः। इति चेन्मैवम्। प्रमाणान्तरसिद्धे हि सति रसे तद्विषयकतात्पर्यान्यथानुपपत्त्या लक्षणाङ्गीकार्या। तदेव न, यतो रसस्या स्मरूपत्वेन स्वप्रकाशतया स्वात्मसंवेदनसिद्धत्वम्। व्यञ्जना चावरणभङ्गे नोपयुक्ता॥

किं च—लक्षणा तावद् द्विविधा—अर्थान्तरसंक्रमितवाच्या, अत्यन्ततिरस्कृतवाच्या च। तत्राद्या तु नैव। यत्र मुख्यार्थः स्वेन रूपेणानुपयोगबाधितो रूपान्तरेणान्वेति तत्रार्थान्तरसंक्रमः। यथा—'रामोऽस्मि सर्वं सहे वैदेही तु कथं भविष्यति' इत्यत्र हि रामत्वमात्रमनाकाङ्क्षितम्। वक्तृत्वेनैव तल्लाभात्। अतो राज्यपरित्यागवनवासादिदुःखसहस्रविशिष्टे लक्षणा। एवं 'रामोऽसौ भुवनेषु विक्रमगुणैः प्राप्तः प्रसिद्धिम्' इत्यत्र रामपदेन ताडकादिहन्ता लक्ष्यते। एवं 'रामस्य गात्रमसि दुर्वहगर्भखिन्नसीताप्रवासनपटो' इत्यनेन नृशंसो लक्ष्यते॥

१ B has marg note on सत्येव as प्रमाणान्तरसिद्धत्वमेव २ B om नृशंसो लक्ष्यते

अत्यन्ततिरस्कृतवाच्या च वाच्यस्य सर्वथैवान्वयेऽप्रवेशात्। यथा—'उप[50a]कृतं बहु नाम' इत्यत्र। एवं च द्वितीयापि नैव। विभावादीनामनुपयोगाभावात्, अन्वये सर्वथैवाप्रवेशाभावाच्च। अथ मुख्यप्रयोगे चमत्काराभावेन रसदोषप्रसङ्गात् न मुख्यः प्रसङ्गः, किंतु विभावादिवाचकपदानां निरूढलक्षणेति चेत् सर्वेषां रसप्रत्ययप्रसङ्गः। वस्तुतस्तु मुख्यार्थबाधायमात्रेऽपि प्रत्यायिका वृत्तिरतिरिक्तैव भवितुमर्हति। मात्सर्यमात्रात्तु लक्षणोच्यते भवद्भिः॥

ननु भवतु अनुमानं रसस्य प्रत्यायकम्। तथा हि—विभावानुभावव्यभिचारिप्रतीतिस्तावद्रसप्रतीतेः साधनमिष्यते। ते हि कार्यकारणसहकारिभूतान् रत्यादीननुमापयन्त एव रसं निष्पादयन्ति। त एव हि प्रतीयमाना आस्वादपदवीमुपेता रसा इत्युच्यन्ते इत्यवश्यमुपेयम् इति चेन्न। रसस्यानन्दमयत्वेन व्याप्तिग्रहाभावात्। अथ यत्र यत्र विभावाद्यभिधानं तदभिनयो वा तत्र शृङ्गारादिरसाविर्भाव इत्यस्ति व्याप्तिग्रहः। न च—

जइपेहुलं जलकुम्भं घेत्तूण समागदम्हि सहि तुरिअं।
समसेअसलिलणीसासणीसहा वीसमामि खणं॥
[Quoted in का॰ प्र॰ III. 13]

इत्यत्र चौर्यरतगोपने व्यङ्ग्ये वक्त्रादिवैशिष्ट्यापेक्षा, अन्यथा कुलाङ्गनोक्तावपि तथा प्रत्ययः स्यात्। अनुमाने तु नैवम्। तत्र हेतुमात्रस्यापेक्षणादिति वाच्यम्। अनुमानपक्षेऽपि विशिष्टस्यैवाव्यभिचारिलिङ्गत्वेन तदुपयोगात्। अत एवाहुः—

यार्थान्तरा[50b]भिव्यक्तौ च सामग्रीष्टा निबन्धनम्।
सैवानुमानपक्षे नो गमकत्वेन संमता॥ १४८॥
[व्यक्तिविवेक॰ III. 30-31]

इति चेन्न। एवं हि रसाविर्भावानुमानं न तु रसास्वादोऽनुमित्यात्मकः। दृश्यते च व्याप्तिपक्षधर्मताज्ञानस्य विलम्बे वैधुर्ये वा सत्यपि वासनावतां झटिति रसप्रत्यय इति न किंचिदेतत्। ननु अभिधामूलव्यङ्ग्येऽभिधयैव व्यङ्ग्यप्रतीतिसिद्धेर्निरर्थिका वृत्त्यन्तरकल्पना। न च प्रकरणादिना एकार्थे

¹ B प्रयोगः; A om. किंतु...प्रसङ्गः...haplographically.

